दाहरणं च संगच्छते ॥ अत एव च तदन्तविधिसूत्रे भाष्ये समासेत्यादिनिषे-
धस्य कथनवदस्य न कथनम् । सो ऽपि निषेधो विशिष्य तत्तद्रूपेण गृहीत-
प्रातिपदिकसूत्र एव । ध्वनितं चेदमसमासे निष्कादिभ्यः [५.१.२०] इति
सूत्रे भाष्ये ॥ अत्र च ज्ञापकं सपूर्वाच्च [५.२.८७] इति सूत्रम् ।
५ अन्यथा पूर्वादिनिः [५.२.८६] इत्यत्र तदन्तविधिनैव सिद्धे किं तेन ॥३१॥

नन्वेवं सूत्रान्ताट्टक् [४ २.६०] दशान्ताड्डः [५.२.४५]
एकगोपूर्वात् [५.२.११८] इत्यादेः केवलसूत्रशब्ददशञ्शब्दैकशा-
ब्दादिष्वपि प्रवृत्तिर्व्यपदेशिवद्भावात्स्यादत आह ।

## व्यपदेशिवद्भावो ऽप्रातिपदिकेन ॥ ३२ ॥

१० पूर्वात्सपूर्वादिनिरित्येकयोग एव कर्तव्ये पृथग्योगकरणमस्या ज्ञापकम् ।
न चेष्टादिभ्यः [५.२.८८] इति सूत्रे ऽनुवृत्त्यर्थं तथा पाठो ऽत एवा-
निष्टीत्यादिसिद्धिरिति वाच्यम् । ज्ञापकपरभाष्यप्रामाण्येनानिष्टीत्यादिप्र-
योगाणामनिष्टत्वात् । एकयोगे ऽपि तावत उत्तरत्रानुवृत्तौ बाधकाभावाच्च ॥
अत एव नान्तादसंख्यादेः [५.२.४९] इति चरितार्थम् । अन्यथा
१५ पञ्चम इत्यादावपि व्यपदेशिवद्भावेन संख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेव ॥ इयं
च प्रातिपदिकग्रहण एव न तु प्रातिपदिकाप्रातिपदिकग्रहणे । तेनोगितश्च
[४.१.६] इत्यत्र न दोष इति तत्रैव भाष्ये स्पष्टम् ॥ इयं ग्रहणवता
[प°३१] इति च परिभाषा प्रत्ययविधिविषयैवेत्यसमासे निष्कादिभ्यः

---

७ B. केवलसूत्रशब्दे दशन्शब्दादिष्वपि.

१० C. एव कर्तव्ये; B. एव वक्तव्ये.

११ C.P. तथा पाठो; B.om. तथा.

१३ C. तावत उत्तरत्रा°; B. तावतोत्तरत्रा°; Compare Nâgojî on the Bhâshya ad I, 1, 72.

१७ C.P. इयं ग्रहणवता; B. इयं च ग्रहणवता.

[५. १.२०] इति सूत्रे भाष्यकैयटयोः । तेनाहन् [८. २. ६८] इत्यादेः परमाहञ्शब्दे केवलाहञ्शब्दे च प्रवृत्तिरित्यन्यत्र विस्तरः ॥३२॥

ननु वान्तो यि [६. १. ७९] इत्यादौ यादौ प्रत्यय इत्यर्थः कथमत आह ।

## यस्मिन्विधिस्तदादावल्ग्रहणे ॥ ३३ ॥ ५

तदन्तविधेरपवाद इयम् ॥ वाचनिक्येषा येन विधिः [१. १. ७२] इत्यत्र भाष्ये पठिता ॥ अस्याश्च स्वरूपसती सप्तमी निमित्तम् । अत एव नेड्वशि कृति [७. २. ८] इत्यादौ वशादेः कृत इत्यर्थलाभः ॥ इयं चार्धधातुकस्येट् [७. २. ३५] इति सूत्रे वलादेरित्यादिग्रहणसामर्थ्याद्विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्व एव प्रवर्तते । तेन ढः सि धुट् १० [८. ३. २९] इत्यादौ सादेः परस्येति नार्थः ॥ तीषसह [७. २. ४८] से ऽसिचि [७. २. ५७] इत्यादौ यथा तादेरित्याद्यर्थलाभस्तथा शब्देन्दुशेखरे निरूपितम् ॥ ३३ ॥

घटपटं घटपटावित्यादिसिद्धय आह ।

## सर्वो द्वन्द्वो विभाषैकवद्भवति ॥ ३४ ॥ १५

द्वन्द्वश्च प्राणि [२. ४. २] इत्यादिप्रकरणाविषयः सर्वो द्वन्द्व इत्यर्थः ॥

---

१ C. इति सूत्रे भाष्य°; B. om. सूत्रे.

६ C. °रपवाद इयम्; B. °रपवाद एवायम्.

१० C. °द्विशेषणविशेष्ययोरु°; B. °द्विशेष्यविशेषणयोरु°.

१२ C. तादेरित्याद्यर्थ°; B. तादेरित्यर्थ°.

१४ B. घटं पटं घटपटावि°.

१५ B. and Bhâshya ad I, 2, 63. विभाषैकव°; C. विभाषयैकव°.

चार्थे द्वन्द्वः [२. २. २९] इति सूत्रेण समाहारेतरयोगयोरविशेषेण द्वन्द्वविधानान्न्यायसिद्धेयम् ॥ तिष्यपुनर्वस्वोः [१. २. ६३] इति सूत्रस्थं बहुवचनस्येति ग्रहणमस्या ज्ञापकम् । तद्धीदं तिष्यपुनर्वस्वि यत्र तद्व्यावृत्त्यर्थम् । न चैवमप्यत्र जातिरप्राणिनाम् [२. ४. ६] इति नित्यैकवद्भावेन बहुवच-
५ नाभावादिदं सूत्रं व्यर्थमिति वाच्यम् । तद्वैकल्पिकत्वस्याप्यनेन ज्ञापनात् । न चैते प्राणिन इति वाच्यम् । आपोमयः प्राण इति श्रुतेरद्भिर्विना ग्लायमानप्राणानामेव प्राणित्वात् ॥ स्पष्टं चेदं तिष्यपुनर्वस्वोः [१. २. ६३] इति सूत्रे भाष्ये ॥ अत एव द्वन्द्वश्च प्राणि [२. ४. २] इत्यादेः प्राण्यङ्गादीनामेव समाहार इति विपरीतनियमो न ॥ ३४ ॥

## १० सर्वे विधयश्छन्दसि विकल्पन्ते ॥ ३५ ॥

व्यत्ययो बहुलम् [३. १. ८५] इति सूत्रे भाष्ये बहुलमिति योगविभागेन षष्ठीयुक्तश्छन्दसि [१. ४. ९] इति सूत्रे वेति योगविभागेन चैषा साधिता ॥ तेन प्रतीपमन्य ऊर्मिर्युध्यतीत्यादि सिद्धम् । युध्यत इति प्राप्नोति ॥ ३५ ॥

१५ ननु क्षियः [६. ४. ५९ । ८. २. ४६] इत्यादावियङ्कथमत आह ।

---

१ C. समाहारेतरयोरवि°.

२ B. बहुवचनग्रहणम°.

३ ज्ञापकम्; P. says that some read ज्ञापकमपि.

३ CP. °पुनर्वस्वित्यत्र तद्व्यावृ°; B. °पुनर्वस्वित्यादिव्यावृ°.

५ C. तद्वैकल्पिकत्वस्याप्य°; B. तद्वैकल्पिकस्याप्य°.

८ C. इत्यादेः; B. इत्यादौ.

१० P. विकल्पन्ते; B.C. विकल्प्यन्ते.

११ C. om. योगविभागेन—वेति.

## प्रकृतिवदनुकरणं भवति ॥ ३६ ॥

क्षिय इतीयङ्निर्देशो ऽस्या ज्ञापकः ॥ तत्रैव प्रातिपदिकत्वनिबन्धनाविभ-क्तिकरणादनित्या चेयमिति क्षियो दीर्घात् [८. २. ४६] इति सूत्रे भाष्ये स्पष्टम् ॥ ३६ ॥

ननु रामावित्यादौ वृद्धौ कृतायां कार्यकालपक्षे ऽपि कथं पदत्वमुभयत ५ आश्रयणे ऽन्तादिवत्त्वाभावाद्यस्माद्विहितस्तदादितदन्तत्वाभावादत आह।

## एकदेशविकृतमनन्यवत् ॥ ३७ ॥

अनन्यवदित्यस्यान्यवन्नेत्यर्थः। तत्रान्यसादृश्यनिषेधे ऽन्यत्वाभावः सुत-राम्। अत एव तादृशादर्थबोधः। अन्यथा शक्ततावच्छेदकानुपूर्व्यज्ञाना-त्ततो बोधो न स्यात्। एवं च राम् इति मान्तस्य यस्माद्विहितस्तत्त्वमौ १० इत्यस्य परादिवत्त्वेन सुप्त्वमिति तदादितदन्तत्वमार्थसमाजग्रस्तम् ॥ छिन्न-पुच्छे शुनि श्वत्वव्यवहारवन्मान्ते तत्त्वं लोकन्यायसिद्धम् ॥ अत एव प्राग्दीव्यतः [४. १. ८३] इति सूत्रे भाष्ये दीव्यतिशब्दैकदेशदीव्यच्छ-ब्दानुकरणमिदमित्युक्त्वा किमर्थं विकृतनिर्देश एतदेव ज्ञापयत्याचार्यो भ-वत्येषा परिभाषैकदेशविकृतमनन्यवदितीत्युक्तम्। एतेनायं न्यायः शास्त्री- १५ यकार्य एव शास्त्रीयविकार एवेत्यपास्तम् ॥ विकृतावयवनिबन्धनकार्ये तु

---

५ P. कार्यकालपक्षे ऽपि; B. C. कार्यकालपक्षे; P. mentions the latter reading.

५ C.P. °यत आश्रयणे; B. °यताश्रयणे.

११ C. परादिवत्त्वेन सुप्त्वमिति तदादितदन्त°; B. परादित्वेन सुप्त्वमिति तदन्त°.

१४ C.P. and Bhâshya ad IV, 1, 83 भवत्येषा; B. भविष्यत्येषा.

नायं छिन्नपुच्छे शुनि पुच्छवत्त्वव्यवहारवद्विकृतावयवव्यवहारस्य दुरुपपादत्वात् ॥ एवमक्तपरिमाणग्रहणे ऽपि नायमुक्तयुक्तेः । एतदेव विधिः [१. १. ७२] इत्यत्र भाष्यकैयटयोर्ध्वनितम् ॥ यत्र त्वर्धं तदधिकं वा विकृतं तत्र जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन तत्त्वाप्रतीतौ कार्यसिध्यर्थं विकृ-
५ तानन्यरूपावयवत्वप्रतीत्यर्थं च स्थानिवत्सूत्रम् ॥ क्वचित्तु लक्ष्यानुरोधान्न्याया-नाश्रयणम् । तेनाभैयादित्यादेसिद्धिः । स्पष्टं च क्वचिन्न्यायाप्रवृत्तिः प्रथमयोः पूर्वसवर्णः [६.१.१०२] इत्यत्र कैयटेन दर्शितेत्यन्यत्र विस्तरः ॥३७॥

पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ॥ ३८ ॥

पूर्वात्परं बलवत् । विप्रतिषेधशास्त्रात्पूर्वस्य परं बाधकमिति यावत् ॥३८॥

१० नन्वेवं भिन्द्धीत्यत्र परत्वात्तातङा बाधितो धिर्न स्यादत आह ।

पुनःप्रसङ्गविज्ञानात्सिद्धम् ॥ ३९ ॥

नन्वेवं तिसृणामित्यत्र परत्वात्तिस्रादेशे पुनस्त्रयादेशः स्यादत आह

सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव ॥ ४० ॥

तत्र क्वचिच्चरितार्थयोरेकस्मिन्युगपदुभयोः कार्ययोरसंभवेन बाधकाभावा-

---

१ C. नायं छिन्न°; B. नायं न्यायश्छिन्न°.

१ C. पुच्छवत्त्वव्यव°; B. पुच्छत्वव्यव°.

१ P. °व्यवहारवद्वि°; B.C. व्यवहाराभाववद्वि°; P. mentions the latter reading.

५ C.P. क्वचित्तु लक्ष्यानुरोधा°; B. क्वचिल्लक्ष्यानुसारा°.

१० According to P. some read भिन्द्धकीत्यत्र परत्वादिना बाधितो ऽकज्न स्यादत आह.

१३ P. and Bhâshya विप्रतिषेधे; B.C. विप्रतिषेधेन.

-त्पर्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्गे नियमार्थं विप्रतिषेधसूत्रमिति सकृद्गति-
न्यायसिद्धिः ॥ यथा तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं
करोति यदा तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये तदोभयोर्न करोति
यौगपद्यासंभवात्तथा शास्त्रयोर्लक्ष्यार्थयोः क्वचिल्लक्ष्ये यौगपद्येन प्रवृत्त्यसं-
भवादप्रतिपत्तौ प्राप्तायामिदं परविप्रतिषेधार्थं तत्र कृते यदि पूर्वप्राप्तिस्तदापि भ- ५
वत्येवेति पुनःप्रसङ्गविज्ञानासिद्धिरिति विप्रतिषेधसूत्रे भाष्ये स्पष्टम् ॥ यत्तु
कैयटादयो व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणोपप्लवादुभयोरपि शास्त्रयोस्तत्त-
ल्लक्ष्यविषययोश्चारितार्थ्येन पर्यायेण द्वयोरपि प्राप्तौ परमेवेति नियमार्थमि-
दमिति सकृद्गतिन्यायसिद्धिः । अत्र पक्ष एतन्नियमवशादेतल्लक्ष्यविषयक-
पूर्वशास्त्रानुपप्लव एव । जातिपक्षे तूद्देश्यतावच्छेदकाक्रान्ते क्वचिल्लक्ष्ये १०
चरितार्थयोर्द्वयोः शास्त्रयोः सत्प्रतिपक्षन्यायेन युगपदुभयासंभवरूपविरोध-
स्थल उभयोरप्यप्राप्तौ परविप्रतिषेधार्थमिदमिति पुनःप्रसङ्गविज्ञानसिद्धिरित्या-
हुस्तन्न ॥ व्यक्तिपक्षे सर्वं लक्ष्यं शास्त्रं व्याप्नोति न जातिपक्ष इत्यत्र मा-
नाभावात् । न ब्राह्मणं हन्यादित्यादौ जात्याश्रयसकलव्यक्तिविषयत्वार्थमेव
जातिपक्षाश्रयणस्य भाष्ये दर्शनात् ॥ अत एव सरूपसूत्रे भाष्ये जातौ प- १५

---

४ C. प्रवृत्त्यसंभवादप्रतिपत्तौ प्राप्ता°; B. °प्रवृत्तौ प्राप्ता°.

५ B. °ध्यर्थमिति तत्र कृते यदि पूर्वप्राप्तिरस्ति तर्हि तदपि.

८ B. °विषयोर°.

८ P. नियमार्थमिदमिति; B.C. नियमार्थमिति.

१० B. क्वचिच्चरितार्थे°.

१२ B. P. परविप्रतिषेधार्थमिदमिति; C. परविप्रतिषेधार्थमिति.

१३ C. om. आहुः.

१४ B. °विषयत्वार्थमेव; C. °विषयार्थमेव.

कार्ये ऽनवयवेन शाकल्येन विधेः प्रवृत्तेर्गौरनुबन्ध्य इत्यादौ सकलगवानुबन्धमासंभवात्कर्मणो वैगुण्यमुक्तम् । द्रव्यवादे चासर्वद्रव्यावगतेर्गौरनुबन्ध्य इत्यादावेकं शास्त्रोक्तमपरमशास्त्रोक्तमित्युक्तम् ॥ किंच न हि भाष्योक्ततज्जातिदृष्टान्तस्य व्यक्तिपक्ष एव सर्वविषयत्वं न जातिपक्ष इत्यत्र मानमस्ति ॥
५ अपि च व्यक्तिपक्षे ऽप्यन्यव्यक्तिरूपविषयलाभेन चरितार्थयोरियं व्यक्तिर्विरोधात्स्वविषयकत्वं न कल्पयतीति वक्तुं शक्यम् । जातिपक्षे ऽपि तज्जात्याश्रयतद्व्यक्तिविषयकत्वमेव नैतद्व्यक्तिविषयकत्वमित्यत्र विनिगमकाभावः ॥ तत्र लक्ष्यानुसारात्क्वचिच्छास्त्रीयदृष्टान्ताश्रयणं क्वचिल्लौकिकदृष्टान्ताश्रयणमिति भाष्यसंमतमार्ग एव युक्त इति बोध्यम् ॥ द्वयोः कार्ययोर्यौ-
१० गपद्येनासंभव एव विप्रतिषेधशास्त्रोपयोगी । इदमिको गुण [१. १. ३] इति सूत्रे कैयटे स्पष्टम् । यथा शिष्टादित्यादौ तातङ्शाभावयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासंभवः । यद्यपि तातङादेः स्थानिवत्त्वेनास्त्येव तत्तथाप्यादेशप्रवृत्त्युत्तरमेव स न तु तत्प्रवृत्तिकाले । एवं नुम्तृज्वत्त्वयोः प्रियक्रोष्टूनीत्यादौ युगपदसंभवो यदागमाः [प० ११] इत्यस्य नुम्प्रवृ-
१५ त्त्युत्तरं प्रवृत्तेः । एवं भिन्द्धीत्यत्र तातङ्भावयोर्युगपदेकस्थानिसंबन्धस्या-

---

१ B. P. सकलगवानुबन्धना°; C. सकलगवामनुबन्धना°.

२ P. एकः शास्त्रोक्तः.

३ C. om. न हि.

६ C. ऽपि तज्जात्याश्रय°; B. ऽपि जात्याश्रय°.

१० C. विप्रतिषेधशास्त्रोपयोगी; B. विप्रतिषेधशास्त्रीयोपयोगी.

१२ B. स्वस्वनिमित्तासंभवः.

१३ C. P. °त्तरमेव स न तु; B. °त्तरमेव तन्न तु.

१४ B. प्रियक्रोष्टुनी°.

१५ C. भिन्द्धीत्यत्र; B. भिन्द्धीत्यादा.

१५ B. °पदेकस्थानत्त

ङ्गरूपनिमित्तानन्तर्यस्य चासंभवो बोध्यः। नुम्नुटोरपि नुट्त्वकादिविभ-क्तयानन्तर्यबाधे नुमि ह्रस्वान्ताङ्गबाध इत्यसंभवाद्विप्रतिषेधः॥ क्वचिदिष्टा-नुरोधेन पूर्वशास्त्रे स्वरितत्वप्रतिज्ञाबलात्स्वरितेनाधिकं कार्यमित्यर्थात्पूर्वमेव भवति। तेन सर्वे पूर्वविप्रतिषेधाः संगृहीता इति स्वरितेन [१. ३. ११] इति सूत्रे भाष्ये। विप्रतिषेधसूत्रस्थपरशब्दस्येष्टवाचित्वात्तत्संग्रह इति ५ विप्रतिषेधसूत्रे भाष्ये॥ ४०॥

नन्वेवमेधत इत्यादौ परत्वाद्विकरणे ऽनुदात्तङितः [१. ३. १२] इत्यादिनियमानुपपत्तिस्तेन व्यवधानादत आह।

## विकरणेभ्यो नियमो बलीयान्॥ ४१॥

अत्र वृद्भ्यः स्यसनोः [१. ३. ९२] इति सूत्रेण स्ये विभाषातङ्विधानं १० ज्ञापकम्। अन्यथा स्यव्यवधाने नियमाप्रवृत्तौ सामान्यशास्त्रेणोभयसिद्ध्या विकल्पविधानं व्यर्थं स्यात्। अत्रार्थे ज्ञापिते तु स्य इति तत्र विषयसप्तमी बोध्येत्यनुदात्तङितः [१. ३. १२] इत्यत्र भाष्यकैयटयोः स्पष्टम्॥ वि-करणव्यवधाने ऽपि नियमप्रवृत्तेरिदं ज्ञापकमिति शदेः शितः [१. ३. ६०] इत्यत्र भाष्ये ध्वनितम्॥ वस्तुतो ऽस्माज्ज्ञापकादनुदात्तङितः [१. ३. १२] १५

---

१ B. °र्यस्यासंभवो.

३ C. om. प्रतिज्ञा.

७ P. नन्वेवमेधत इत्यादौ; B. C. नन्वेवमेधते पचत इत्यादौ; P. mentions the reading नन्वेवं पचत इत्यादौ.

१० विभाषातङ्विधानं; P. says that some read विभाषा तङ्विधानं, others विकल्पविधानं.

११ C. स्यव्यवधाने; B. स्यविधाने.

१२ C. P. तत्र; C. om. तत्र.

१३ C. इत्यत्र भाष्य°; B. इति मूलभाष्य°

इत्यादि प्रकरणं तिबादिविध्येकवाक्यतया विधायकम्। तत्र धातोः[३.१.९१] इति विहितपञ्चमी तत्समानाधिकरणमनुदात्त [ १. ३. १२ ] इत्यादि विहितविशेषणमेव। एवं च लावस्थायां स्ये ऽपि तद्व्यवधाने तङ्गिद्धिः। शबादिभ्यस्तु पूर्वमेव नियमः। यद्वा लमात्रापेक्षत्वादन्तरङ्गा आदेशा ५ लकारविशेषापेक्षत्वात्स्यादयो बहिरङ्गा इति दिग्योगलक्षणपञ्चम्यामपि न दोषः। अत्र पक्षे वृद्भ्यः स्य [ १.३.९२ ] इति सूत्रं स्यविषय इति व्याख्येयम्। आत्मनेपदशब्दादौ भाविसंज्ञाश्रयणीयेति तत्त्वम्॥ भिन्नवाक्यतया सामान्यशास्त्रविहितानां नियमे तु लुगादिनेव नियमेन जातनिवृत्तिरङ्गीकार्या। भुक्तवन्तं प्रति मा भुक्था इति ब्रूयात्किं तेन कृतं स्यादिति १० न्यायस्तु नात्र शास्त्र आश्रयितुं युक्तो नियमादिशास्त्राणां वैयर्थ्यापत्तेः। ध्वनितं चेदं स्थाने ऽन्तरतमसूत्रे भाष्ये। शास्त्रानर्थक्यं तु वृद्धिसंज्ञासूत्रे भाष्ये तिरस्कृतम्। सामान्यशास्त्रेणोत्पत्तिस्तु सरूपसूत्रस्थकैयटरीत्या प्रधानानुरोधेन गुणभेदकल्पना तावत्प्रकृतिकल्पनया कार्या प्रत्ययनिवृत्तौ च तत्कल्पितप्रकृतेरपि निवृत्तिः कल्प्येति गौरवमित्यन्यत्र विस्तरः॥ ४१॥

## १५ परान्नित्यं बलवत्॥ ४२॥

कृताकृतप्रसङ्गित्वात्। तत्राकॢप्ताभावकस्याभावकल्पनापेक्षया कॢप्ताभावकस्यैव तत्कल्पनमुचितमिति नित्यस्य बलवत्त्वे वीजम्। तदाह। कृताकृत-

१ C. °विध्यैकवाक्यतया.

२ C. °शेषणमेव; B. om. एव.

३ B. P. स्ये ऽपि तद्व्यवधाने; C. स्ये तद्व्यवधाने ऽपि.

६ C. स्ये विषये.

८ C. P. नियमे तु लुगा°; B. om. तु.

१० C. युक्तो; B. शक्यो.

प्रसङ्गि नित्यं तद्विपरीतमनित्यम् । अत एव तुदतीत्यादौ परादपि गुणान्नित्यत्वाच्छप्रत्ययादिर्भवति ॥ ४२ ॥

यद्व्यक्तिसंबन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तिसंबन्धितयैव पुनःप्रवृत्तौ कृताकृतप्रसङ्गित्वमित्याशयेनाह ।

**शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ॥ ४३ ॥** ५

इदं शदेः शितः [ १. ३. ६० ] इति सूत्रे भाष्ये स्पष्टम् । तत्र हि न्यविशतेत्यत्र विकरणे कृते तदन्तस्याडकृते धातुमात्रस्येत्यडनित्य इत्युक्तम् ॥ ४३ ॥

तत्तुल्यन्यायेनाह ।

**शब्दान्तरात्प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यत्वम् ॥ ४४ ॥** १०

एतन्मूलकमेवाह ।

**लक्षणान्तरेण प्राप्नुवन्विधिरनित्यः ॥ ४५ ॥**

अतिदेशविषय इयमसिद्धवत्सूत्रे कैयटेनोक्ता ॥ ४५ ॥

यदा तु शास्त्रव्यतिरेकेण तद्विधेयकार्ययोरेव नित्यत्वादिविचारो यदापि व्यक्तिविशेषाश्रयणाभावस्तदाह । १५

**क्वचित्कृताकृतप्रसङ्गमात्रेणापि नित्यता ॥ ४६ ॥**

कृते द्वितीये नित्यत्वेनाभिमतस्य पुनःप्रसङ्गमात्रं नित्यत्वव्यवहारे प्र-

---

७ C. P. धातुमात्रस्येत्यडनित्य; B. om. इति.

९ C. तत्तुल्यन्यायेनाह; B. एतत्तुल्यन्यायेनाह.

१० B. °श्चानित्यम्.

१७ B. P. क्वचित्कृता°; C. om. क्वचित्.

१८ C °स्य पुनःप्रसङ्गमात्रं नित्य°; B. °स्य प्रसङ्गमात्रनित्य°.

पीजक न तु बाधकाबाधितफलोपहितप्रसङ्गो ऽपि तथेति भावः ॥ ४६ ॥

तदाह ।

यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ॥४७॥

५ क्वचित्तु बाधकाबाधितफलोपहितप्रसङ्ग एव गृह्यते । तदाह ।

यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम् ॥४८॥

सप्तमे कैयटेनैतदुपस्तम्भकं लोकव्यवहारद्वयमुदाहृतम् । बालिसुग्रीवयोर्युध्यमानयोर्भगवता बालिनि हते ऽपि सुग्रीवस्य बालिनः प्राबल्यं न

१० व्यवहरन्ति । भगवत्सहायैः पाण्डवैर्जये लब्धे ऽपि पाण्डवानां प्राबल्यं व्यवहरन्ति चेति ॥ सर्वं चेदं लक्ष्यानुरोधाद्व्यवस्थितम् ॥ ४८ ॥

लुटः प्रथमस्य [ २. ४. ८५ ] इति सूत्रे भाष्ये

स्वरभिन्नस्य प्राप्नुवन्विधिरनित्यो भवति ॥ ४९ ॥

इति पठ्यते ॥

---

१ B. P. °प्रसङ्गो ऽपि तथेति भावः । ; C. °प्रसङ्गः । .

२ P. यस्य च; B. C. om. च.

५ C. क्वचित्तु बाध°; B. om. तु.

८ B. C. °दुपष्टम्भकं.

८ C. °द्वयमुदाहृतम् ; B. °द्वयं समुदाहृतम् .

११ B. व्यवहरन्ति चेति ; C. व्यवहरन्ति.

११ C. लक्ष्यानुरोधा°; B. लक्ष्यानुसारा°.

१३ C. and Bháshya ad III, 1, 3 स्वरभिन्नस्य प्राप्नुवन्विधिरनित्यो भवति; B. स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यः.

यत्र त्वेकस्यैव कार्यस्य परत्वं नित्यत्वं च तत्रेच्छयान्यतरत्तदुभयं वास्य बलवत्त्वे नियामकमुल्लेख्यम् । अत एव तत्रतत्र परत्वान्नित्यत्वाच्चेति भाष्य उच्यते । वस्तुतस्तत्र परत्वादित्युक्तिरेकदेशिनः । स्पष्टं चेदं विप्रतिषेधसूत्रे कैयटे ॥ णौ चङि [७. ४. १] इति ह्रस्वापेक्षया नित्यत्वान्तरङ्गत्वयुक्तद्वित्वस्य प्रथमतः प्रवृत्तौ नित्यत्वादित्येव भाष्य उक्तम् ॥ एवं नित्यान्तरङ्गयोर्बलवत्त्वमपि यौगपद्यासंभव एवेति बोध्यम् ॥ ४९ ॥   ५

नित्यादप्यन्तरङ्गं बलीयो ऽन्तरङ्गे बहिरङ्गस्यासिद्धत्वात् । तदाह ।

## असिद्धं बहिरङ्गमन्तरङ्गे ॥ ५० ॥

अन्तर्मध्ये बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्ये ऽन्तर्भूतान्यङ्गानि निमित्तानि यस्य तदन्तरङ्गम् । एवं तदीयनिमित्तसमुदायाद्बहिर्भूताङ्गकं बहिरङ्गम् । एतच्च खरवसानयोः [८.३.१५] इति सूत्रे ऽसिद्धवत्सूत्रे च भाष्यकैयटयोः स्पष्टम् ॥ अत्राङ्गशब्देन शब्दरूपं निमित्तमेव गृह्यते शब्दशास्त्रे तस्य प्रधानत्वात् । तेनार्थनिमित्तकस्य न बहिरङ्गत्वम् । अत एव न तिसृचतसृ [६. ४. ४] इति निषेधश्चरितार्थः । अन्यथा स्त्रीत्वरूपार्थनिमित्तकतिस्रपेक्षयान्तरङ्गत्वात्त्रयादेशे तदसंगतिः स्पष्टैव । अत एव त-   १०   १५

१ C. तत्रेच्छया युगपदुभयं वा ; B तत्रेच्छयान्यतरदुभयं वा ; P. reads तदुभयं.

२ C. P. वस्तुतस्तत्र ; B. वस्तुतस्त्वत्र.

५ C. °द्वित्वस्य; B. °द्विवचनस्य (sic !).

६ C. एवेति बोध्यम् ; B. om. इति.

१२ P. निमित्तमेव; B. C. om. एव.

१३ C. तेनार्थनिमित्तस्य.

१४ B. स्त्रीत्वनिमित्तक°.

[illegible]ऽत्र अन्तरस्य प्रतिषेध इति स्थानिवत्सूत्रस्थभाष्यवार्तिकादि संगच्छते ॥
एतेन मैत्रेरः पचेदित्यादावेयादीनामङ्गसंज्ञापेक्षत्वेन बहिरङ्गतयासिद्धत्वा-
द्यलि लोपो न स्यादिति परास्तम् । एयादेशादेरपरनिमित्तकत्वेनान्तरङ्ग-
त्वात् ॥ ननु येन विधिस्तदन्तस्य [१.१.७२] इति सूत्रे भाष्य इको यणचि
५ [६. १. ७७] इत्यादावपि तदन्तविधौ स्योन इत्यत्रान्तरङ्गत्वाद्यणो गुणबा-
धकत्वमिष्यते तन्न सिध्येदूनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य
गुण इत्यन्तरङ्गत्वाद्गुण एव स्यादित्युक्तम् । अत्र कैयटः । सिवेर्बाहुलकादौ-
णादिके नप्रत्यये गुणवलोपोठां प्रसङ्ग ऊडपवादत्वाद्वलोपं बाधते गुणं
त्वन्तरङ्गत्वाद्बाधते । गुणो ह्यङ्गसंबन्धिनीमिग्लक्षणां लघ्वीमुपधामार्धधातुकं
१० चाश्रयति । ऊठ् तु वकारान्तमङ्गमनुनासिकादिं च प्रत्ययमित्यल्पापे-
क्षत्वादन्तरङ्गः । तत्र कृते यण्गुणौ प्राप्नुत इति । एवं च संज्ञापेक्षयापि
बहिरङ्गत्वं स्पष्टमेवोक्तमिति चेत् । न । तदन्तविधावपि बहुपदार्थापेक्षत्व-
रूपबहिरङ्गत्वस्य गुणे सत्त्वेन तत्र दोषकथनपरभाष्यासंगतेः । बहिरङ्गा-
न्तरङ्गशब्दाभ्यां बह्वपेक्षत्वाल्पापेक्षत्वयोः शब्दमर्यादयालाभाच्च । तथा
१५ सत्यसिद्धं बह्वपेक्षमल्पापेक्ष इत्येव वदेत् ॥ अत एव विप्रतिषेधसूत्रे भाष्ये
गुणाद्यणादेशोऽन्तरङ्गत्वादित्यस्य स्योन इत्युदाहरणं न तु गुणादूडन्त-
रङ्गत्वादित्युक्तम् । त्वद्रीत्या तदपि वक्तुमुचितम् । प्राथम्यात्तदेव वा वक्तु-
मुचितम् । मम त्वन्तरङ्गपरिभाषया तद्वारणासंभवात्तन्नोक्तम् । किंच सिद्धा-
न्ते नित्यत्वात्पूर्वमूड्गुणस्तूठि यणा बाधितत्वादनित्यः । ऊनशब्दमाश्रित्ये-
२० त्यादिभाष्येण च परिभाषायामङ्गशब्देन सप्तम्याद्यन्तोपात्तं शब्दरूपं नि-

---

१ C. °त्सूत्रस्थभाष्य°; B. °त्सूत्र एव भाष्य°.

२ B.P. पचेदित्यादावे°; C. पचेरन्नित्यादावे°.

१९ C. नित्यत्वात्पूर्व°; B. नित्यत्वाद्गुणात्पूर्व°.

२० B. °भाष्येण परि°; C. °भाष्ये च परि°; P. reads च.

२० P. सप्तम्याद्यन्तोपात्तं; B.C. सप्तम्याद्यन्तपदोपात्तं.

मित्तमेव गृह्यत इति स्पष्टमेवोक्तम् ॥ यत्तु कैयटेन तदन्तविधिपक्षे [illegible]-ङ्गुणः प्राप्नोतीत्युक्तं तत्तूनशब्दमाश्रित्येत्यादिभाष्यासंगत्या चिन्त्यम् ॥ वलि लोपे ऽन्तरङ्गपरिभाषा न प्रवर्तत इति तु न युक्तम् । तत्सूत्रे भाष्य एव व्रश्चादिषु लोपातिप्रसङ्गमाशङ्क्योपदेशसामर्थ्यान्न न च वृश्चतीत्यादौ चारितार्थ्यं बहिरङ्गतया संप्रसारणस्यासिद्धत्वेन पूर्वमेव तत्प्राप्तेरिति ५ भाष्योक्तेः ॥ यत्तु नलोपस्य षट्संज्ञायामसिद्धत्वात्पञ्चेत्यत्र न षट् [ ४. १. १० ] इति निषेध इति तच्चिन्त्यम् । नलोपस्य हि पदसंज्ञासापेक्षत्वेन बहिरङ्गत्वं वाच्यम् । तच्च न संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात् । पञ्चेत्यत्र निषेधस्तु स्त्रियां यत्प्राप्नोति तन्नेति व्याख्यानसामर्थ्येन भूतपूर्वषट्त्वमादायेति बोध्यम् ॥ अत एव कृति तुग्ग्रहणं चरितार्थम् । वृत्रहभ्यामित्यादौ पद- १० त्वनिमित्तकत्वे ऽपि नलोपस्य बहिरङ्गत्वाभावात् । श्याम: पदसंज्ञानिमित्तत्वे ऽपि नलोपस्य तन्निमित्तकत्वाभावात् । परंपरया निमित्तत्वमादाय बहिरङ्गत्वाश्रयणे तु न मानम् । स्पष्टं चेदं नलोपः सुप् [ ८. २. २ ] इति सूत्रे भाष्य इति तत्रैव भाष्यप्रदीपोद्द्योते निरूपितम् ॥

अन्तरङ्गे कर्तव्ये जातं तत्कालप्राप्तिकं च बहिरङ्गमसिद्धमित्यर्थः । १५ वृश्चत्यादिषु पदसंस्कारपक्षे समानकालत्वमेव द्वयोरिति बोध्यम् ॥ एतेनान्तरङ्गं बहिरङ्गाद्बलीय इति परिभाषान्तरमित्यपास्तम् । एनामाश्रित्य

---

७ C. नलोपस्य हि पदसंज्ञासापेक्ष°; B. नलोपस्य पदसंज्ञापेक्ष°; P. reads हि.

८ C. संज्ञाकृतबहिर°; B. संज्ञाकृतस्य बहिर°

१४ B. तत्रैव प्रदीपो°.

१६ P. वृश्चत्यादिषु; B.C. व्रश्चादिषु.

१६ C. द्वयोरिति; B. द्वयोरपि.

१७ B. परिभाषान्तरमपास्तम्.

विप्रतिषेधसूत्रे भाष्ये तस्याः प्रत्याख्यानाच्च ॥ अन्तरङ्गशास्त्रत्वमस्या लिङ्गम् ॥

इयं च त्रिपाद्यां न प्रवर्तते त्रिपाद्या असिद्धत्वात् । अस्यां च वाह ऊठ्सूत्रस्थमूड्ग्रहणं ज्ञापकमित्येषा सपादसप्ताध्यायीस्था । अन्यथा संप्रसा-
५ रणमात्रविधानेन लघूपधगुणे वृद्धिरेचि [६. १. ८८] इति वृद्धौ विश्वौह इत्यादिसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव । सत्यां ह्येतस्यां बहिरङ्गसंप्रसारणस्यासिद्धत्वाल्लघूपधगुणो न स्यात् ॥ न च पुगन्त [७. ३. ८६] इति सूत्रे निमित्तमिको विशेषणमत एव भिनत्तीत्यादौ न गुण एवं च नाजानन्तर्ये [प° ५१] इति निषेधात्कथं परिभाषाप्रवृत्तिरिति वाच्यम् । प्रत्ययस्याङ्गांश उत्थिता-
१० काङ्क्षत्वेन तत्रैवान्वयात् । पुगन्तेत्यादौ कर्मधारयाश्रयणेन प्रत्ययपराङ्गावयवलघूपधास्येको गुण इतीको गुणवृद्धी [१. १. ३] इति सूत्रभाष्यसंमतेऽर्थे भिनत्तीत्यादावदोषाच्च ॥ अकारान्तोपसर्गे ऽनकारान्ते चोपपदे वहेर्वाहेर्वा ण्विक्विचावनभिधानान्न स्त एव । वार्यूहेत्यादि तूहतेः क्विपि बोध्यम् । धातूनामनेकार्थत्वान्नार्थासंगतिः । प्रौह इत्याद्यसाध्वेव वृद्धेरप्राप्तेः ।
१५ अस्योहस्यानर्थक्यान्न प्रादूहोढो [६. १. ८९. ३] इत्यस्यापि प्रवृत्तिः ॥

न च कार्यकालपक्षे त्रिपाद्यामेतत्प्रवृत्तिर्दुर्वारेति वाच्यम् । पूर्वं प्रति परस्यासिद्धत्वादन्तरङ्गाभावेन पूर्वस्य तन्निरूपितबहिरङ्गत्वाभावात्तया तस्यासिद्धत्वप्रतिपादनासंभवात् । न चानया पूर्वस्यासिद्धत्वात्तदभावेन तं प्रति

---

१ B. तत्प्रत्याख्यानाच्च ॥ अन्तरङ्गशास्त्रमस्या.

६ P. ह्येतस्यां; B.C. हि तस्यां.

११ C. गुणवृद्धीति°(!); B. om. इति.

१३ B. वार्यूहेत्याद्यूहतेः.

१६ P. त्रिपाद्यामेतत्प्र°; B.C. त्रिपाद्यां तत्प्र°.

१७ C. °भावात्तया तस्या°; B. om. तया.

१८ C. °सिद्धत्वात्तदभावेन; B. om. तद्.

परासिद्धत्वं पूर्वत्र [ ८. २. १ ] इत्यनेन वक्तुमशक्यमिति बाध्यानूक्तं पूर्वं हि विनिगमनाविरहादुभयोरप्यप्रवृत्त्यापत्तेः । किंच पूर्वत्रेत्यस्य प्रत्यक्षत्वेन तेनानुमानिक्या अस्या बाध एवोचितः । अतः कार्यकालपक्षे ऽपि त्रिपाद्यामस्या अनुपस्थितिरेव ॥ अत एव कार्यकालपक्षमेवोपक्रम्योक्तयुक्तीरुक्तातो ऽयुक्तो ऽयं परिहारो न वा बहिरङ्गलक्षणत्वादितीत्युक्तं विसर्जनीयसूत्रे भाष्ये सिद्धान्तिना । त्रिपादीस्थे ऽन्तरङ्गे कर्तव्ये ऽयं परिहारो न युक्त इति तदर्थः । किंतु वचनमेवारब्धव्यमिति तदाशयः ॥ अत एव निगाल्यत इत्यादौ लत्वार्थं तस्य दोष इति वचनमेवारब्धम् । अन्यथान्तरङ्गत्वाण्णिलोपात्पूर्वं वैकल्पिकलत्वे तद्वैयर्थ्यं स्पष्टमेव ॥ ये ऽपि लक्ष्यानुरोधादानुमानिक्याप्यन्तरङ्गपरिभाषया प्रत्यक्षसिद्धस्य पूर्वत्रेत्यस्य बाधं वदन्ति ते ऽपि लक्षणैकचक्षुर्भिर्नादर्तव्या इति दिक् ॥

अत एवोमाङोश्च [ ६. १. ९५ ] इत्याङ्ग्रहणं चरितार्थम् । तद्धि खट्वा आ ऊढेत्यत्र परमपि सवर्णदीर्घं बाधित्वान्तरङ्गत्वाद्गुणे कृते वृद्धिप्राप्तौ पररूपार्थम् । साधनबोधकप्रत्ययोत्पत्त्यनन्तरं पूर्वं धातोरुपसर्गयोगे पश्चात्खट्वाशब्दस्य समुदायेन योगाद्गुणस्यान्तरङ्गत्वमिति संप्रसारणाच्च [ ६. १. १०८ ] इति सूत्रे भाष्ये स्पष्टम् । एहीत्यनुकरणस्य शिवादिशब्दसंबन्धे तु नास्य प्रवृत्तिर्ज्ञापकपरसंप्रसारणाच्चेतिसूत्रस्थभाष्यप्रामाण्येनानित्यं प्रकृतिवदनुकरणमित्यतिदेशमादाय लब्धाङ्त्व एतदप्रवृत्तेः ॥ यत्तु पूर्वं

३ B. त्रिपाद्यामस्यानुप°.

६ B. °सूत्रभाष्ये.

८ B. om. तस्य दोष इति.

११ C. लक्षणैकचक्षुर्भिर्नादर्तव्या इति; B. लक्षणचक्षुर्भिर्नादरणीया इति.

१३ BP. °ङ्गत्वाद्गुणे कृते; C. om. कृते.

१४ B.P. साधनबोधन°; C. साधकबोधक°.

...कार्येण युज्यते पश्चात्साधनेन । उपसर्गेण तत्संज्ञकशब्देन साधनेन कारकेण तत्प्रयुक्तकार्येण । अत एवानुभूयत इत्यादौ सकर्मकत्वात्कर्मणि लकारादिसिद्धिरिति वाच्य । क्रियायाः साध्यत्वेन बोधात्साध्यस्य च साधनाकाङ्क्षया तत्संबन्धोत्तरमेव निश्चितक्रियाबोधेन साधनकार्यप्रवृत्त्युत्तरमेव क्रियायोगनिमित्तोपसर्गसंज्ञकस्य संबन्धौचित्यात् । अत एव सुट्कात्पूर्वः [६. १. १३५] इति सूत्रे पूर्वं धातुरुपसर्गेणेत्युक्त्वा नैतत्सारं पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेत्युक्त्वोक्तयुक्त्यास्यैव युक्तत्वमुक्तं साधनं हि क्रियां निर्वर्तयतीत्यादिना । उपसर्गद्योत्यार्थान्तर्भावेण धातुनैवार्थाभिधानादुक्तेषु कर्मणि लकारादिसिद्धिः । पश्चाच्छ्रोतुर्बोधाय द्योतकोपसर्गसंबन्धः ॥ एवं चान्तरङ्गतगार्थकोपसर्गनिमित्तः सुट् सं कृ तीत्यवस्थायां द्वित्वादिवः पूर्वं प्रवर्तते ततो द्वित्वादि ॥ अत एव प्रणिदापयतीत्यादौ ...यदागमाः [प° ११] इति न्यायेन समाहितं भाष्ये ॥ अत एव प्रत्येति प्रत्यय इत्यादिसिद्धिः । अन्यथान्तरङ्गत्वात्सवर्णदीर्घे रूपासिद्धिः ॥ यदुपसर्गनिमित्तकं कार्यमुपसर्गार्थाश्रितं विशिष्टोपसर्गनिमित्तत्वात्तदन्तरङ्गम् । यत्तु न तथा तत्र पूर्वागतसाधननिमित्तकमेवान्तरङ्गम् । अत एव न धातु [१. १. ४] इति सूत्रे प्रेद्ध इत्यत्र गुणो बहिरङ्ग इति भाष्य उक्तम् ॥ किंच पूर्वमुपसर्गयोगे धातूपसर्गयोः समास ऐकस्वर्याद्यापत्तिरित्युपपदमतिङ् [२. २. १९] इति सूत्रे भाष्ये स्पष्टम् ॥ भावार्थप्रत्ययस्यापि पूर्व-

१ P. mentions the reading साधनाकाङ्क्षत्वात्.

६ P. ...वे हि; B.C. and Bhashya om. हि.

८ C. P. and Bhashya साधनं हि; B. om. हि.

१३ C. रूपासिद्धिः; B. रूपासिद्धेः.

१४ C. °र्गनिमित्तकं; B. °र्गनिमित्तं.

१५ C. °...; B. om. तद्.

मेवोत्पत्तिः। अत एव णेरध्ययने [ ७. २. २६ ] इति निर्देशः [illegible]।
इदं च सामान्यापेक्षं ज्ञापकं भावतिङो ऽपि पूर्वमुत्पत्तेः। अन्यथा [illegible]
समासापत्तिः। तिङि त्वतिङिति निषेधान्न दोषो यदि भावतिङुपसर्गयोर्यो
ऽस्तीत्यलम्॥

यत्तु विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गं विशेषापेक्षे विशेषधर्मस्याधिक- ५
क्ष्म निमित्तत्वात्। यथा रुदादिभ्यः सार्वधातुके [ ७. २. ७६ ] इत्यत्र
रुदादित्वं सार्वधातुकत्वं च। तत्र सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं
प्रत्ययस्य प्रत्ययत्वज्ञानं चावश्यकमिति यासुडन्तरङ्गः। एतेन यदनुदात्त-
ङितः [ १. ३. १२ ] इति सूत्रे कैयटेनोक्तं लमात्रापेक्षयान्तरङ्गास्तिवाद-
यो लकारविशेषापेक्षत्वाद्बहिरङ्गाः स्यादय इति तत्परास्तम्। विशेषापेक्षत्वे १०
ऽपि तस्य सामान्यधर्मनिमित्तकत्वाभावेन तत्त्वस्य दुरुपपादत्वात्। परनि-
मित्तकत्वेन स्यादीनां बहिरङ्गत्वाच्चेति तन्न। विशेषस्य व्याप्यत्वेन व्याप-
कस्यानुमानेनोपस्थितावपि तस्य निमित्तत्वे मानाभावेनाधिकधर्मनिमित्तक-
त्वानुपपादनात्। भाष्य एवंविधान्तरङ्गबहिरङ्गभावस्य क्वाप्यनुल्लेखाच्च॥
यत्तु मतुप्सूत्रे भाष्ये पञ्च गावो यस्य सन्ति स पञ्चगुरित्यत्र मतुप्प्राप्तिमाशा- १५
ङ्क्य प्रत्येकमसामर्थ्यात्समुदायादप्रातिपदिकत्वात्समासात्समासेनोक्तत्वादिति

---

२ C. सामान्यापेक्षं; B. सामान्यापेक्षकं.

२ B.P. पूर्वमुत्पत्तेः; C. पूर्वमुत्पत्तिः.

३ B. भावतिङ्युपसर्ग°.

१० B. बहिरङ्गा स्यायादय.

१० C. इति परास्तम्.

१२ B. विशेष्यस्य.

१४ C. क्वाप्यनुल्लेखाच्च; B. क्वाप्यनुल्लेखनाच्च.

१५ C. मतुप्प्राप्तिमाशङ्क्य; B. मतुप्प्राप्तीत्याशङ्क्य

सिद्धान्तिनोक्के नैवस्सारमुक्के ऽपि ।इ प्रत्ययार्थ उत्पद्यते द्विगोस्तद्धितो यथा पाञ्चनापितिरिति पूर्वपक्ष्युक्तिः । द्विगोर्लुगनपत्ये [ ४. १. ८८ ] इति लुग्विधानात्तद्धितार्थेद्विगोस्तद्धितो भवति पञ्चगुशब्दश्च द्विगुरिति तदाशयं कैयटः । ततो द्वैमातुरः पाञ्चनापितिः पञ्चसु कपालेषु संस्कृत इत्यादौ ५ सावकाशद्विगोर्बहुव्रीहिणा प्रकृते परत्वाद्बाध इत्याशयेन नैष द्विगुः कस्तर्हि बहुव्रीहिरिति सिद्धान्तिनोक्ते तमवकाशमजानानो ऽपवादत्वाद्विगुः प्राप्नोतीति पूर्वपक्षी । अन्यपदार्थे सुबन्तमात्रस्य विधीयमानबहुव्रीहेः संख्यायास्तद्धितार्थे विधीयमानो द्विगुर्विशेषविहितत्वाद्बाधकः प्राप्नोतीति कैयटः । ततः सिद्धान्त्येकदेश्याह । अन्तरङ्गत्वाद्बहुव्रीहिः । कान्तरङ्गता । अन्यपदार्थे १० बहुव्रीहिर्विशिष्टे ऽन्यपदार्थे द्विगुस्तस्मिश्चास्य तद्धिते ऽस्तिग्रहणं क्रियत इति । अधिकास्त्यर्थापेक्षमत्वर्थनिमित्तो द्विगुर्बहिरङ्ग इति कैयट इति । नैषा सिद्धान्त्युक्तिरेतावताप्यपवादत्वाहानेः । अच्सामान्यापेक्षयणो विशिष्टसवर्णाजपेक्षदीर्घेण बाधदर्शनात् । किंचोक्तरीत्या परत्वेनैव बाधसिद्धेः । किंचात्राधिकापेक्षत्वेनैव बहिरङ्गत्वं न केवलविशेषापेक्षत्वेनेति नैतद्भाष्यारूढं १५ विशेषापेक्षस्य बहिरङ्गत्वम् । अत एव सुबन्तसामान्यापेक्षो बहुव्रीहिस्तद्विशेषापेक्षो द्विगुरिति नोक्तं भाष्ये । न चार्थकृतबहिरङ्गत्वस्यानाश्रयणादिदम-

---

१ C. सिद्धान्तिनोक्ते; B. सिद्धान्तिनोक्तं.

२ P. पूर्वपक्ष्युक्तिः; B.C. पूर्वपक्ष्युक्तिर्भाष्ये.

५ P. परत्वाद्बाधः; B. C. om. परत्वात्.

५ C. इत्याशयेन; B. इत्याशयकेन.

६ C. तमवकाशम°; B. तमेवावकाशम°.

७ B. and Kaiyata संख्यायास्तद्धितार्थे; C. संख्यापास्तद्धितार्थेति.

८ P. कैयट इति; B. C. om. इति.

१५ B. °द्विशेषापेक्षार्थोद्विगु°.

१६ C. °त्वस्यानाश्रय°; B. °त्वानाश्रय°.

युक्तम्। एकदेशयुक्तित्वेनादोषात्। अत एवास्तिग्रहणं नोपाध्यर्थं किंत्वस्ति-
शब्दान्मतुबर्थमिति त्वदभिमतं बहिरङ्गत्वमपि द्विगोर्नास्तीति प्रतिपाद्य सि-
द्धान्तिना मत्वर्थे द्विगोः प्रतिषेधो वक्तव्य इति वचनेनैतत्सिद्धमित्युक्तम् ॥
अत एव तदोः सः सौ [ ७. २. १०६ ] इति सूत्रे ऽनन्त्ययोरिति चरि-
तार्थम्। अन्यथा प्रत्ययसामान्यापेक्षत्वेनान्तरङ्गत्वादन्त्यस्यात्वे ऽनन्त्यस्यैव सत्वे ५
सिद्धे तद्वैयर्थ्यं स्पष्टमेव ॥ पादः पत् [ ६. ४. १३० ] इति सूत्रे भाष्यकै-
यटयोरप्येतदन्तरङ्गत्वाभाव एव सूचित इति सुधियो विभावयन्तु ॥

नन्वेवमसुस्रुवदित्यत्र लघूपधगुणादुवङो ऽल्पनिमित्तत्वाभावादुवङ् स्या-
दिति चेत्। न। तत्रान्तःकार्यत्वरूपान्तरङ्गत्वसत्त्वात्। अन्तःकार्यत्वं च पूर्वो-
पस्थितनिमित्तकत्वमङ्गशब्दस्य निमित्तपरत्वात् ॥ इदमन्तरङ्गत्वं लोकन्याय- १०
सिद्धमिति मनुष्यो ऽयं प्रातरुत्थाय शरीरकार्याणि करोति ततः सुहृदां ततः
संबन्धिनामर्थानामपि जातिव्यक्तिलिङ्गसंख्याकारकाणां बोधक्रमः शास्त्र-
कृत्कल्पितस्तत्क्रमेणैव च तद्बोधकशब्दप्रादुर्भावः कल्पित इति तत्क्रमेणैव
तत्कार्याणीति पट्व्येत्यादावन्तरङ्गत्वात्पूर्वं पूर्वयणादेशः परयणादेशस्य बहिर-
ङ्गतयासिद्धत्वादित्यनेनाचः परस्मिन् [ १. १. ५७ ] इति सूत्रे भाष्ये स्प- १५
ष्टम् ॥ तदपि युगपत्प्राप्तौ पूर्वप्रवृत्तिनियामकमेव यथा पट्व्येत्यत्र पदस्य
विभज्यान्वाख्याने न तु जातस्य बहिरङ्गस्य तादृशे ऽन्तरङ्गे ऽसिद्धतानिया-
मकं प्रागुक्तलोकन्यायेन तथैव लाभादिति वाह ऊठ् [ ६. ४. १३२ ]-
सूत्रे कैयटे स्पष्टम्। अत एव वाय्वोरित्यादौ वलि लोपो यणः स्थानिवत्त्वेन

---

३ B. and Bhâshya वक्तव्य; C. वाच्य.

५ B. ऽनन्त्यस्य सत्वे.

१३ P. तत्क्रमेणैव च; B.C. om. च.

१५ P. °दित्यनेनाचः; B.C. दित्यादिनाचः.

वारितो भाष्यकृता ॥ क्रमेणान्वाख्याने तूक्तोदाहरणे पूर्वप्रवृत्तिकत्वमन्तरङ्गत्वं बहिरङ्गस्यासिद्धत्वमपि निमित्ताभावादप्राप्तिरूपं बोध्यम् ॥ यत्त्वेवंरीत्या पूर्वस्थानिकमप्यन्तरङ्गमिति तच्चिन्त्यम् । स्त्रजिष्ठ इत्यादौ विन्मतोर्लुकि टिलोपस्यापवादविन्मतोर्लुक्प्रवृत्त्या जातिपक्षाश्रयणेन वारणप्रयासस्य प्रकृत्यैकाच्

५ [६. ४. १६३] इति सूत्रप्रयोजनखण्डनावसरे भाष्यकृत्कृतस्य नैष्फल्यापत्तेः । त्वदुक्तरीत्या विन्मतोर्लुको बहिरङ्गासिद्धत्वेनानायासतस्तद्वारणात् । भाष्य ईदृशरीत्या बहिरङ्गासिद्धत्वस्य क्वाप्यनाश्रयणाच्च । परिभाषायामङ्गशब्दस्य निमित्तपरत्वाच्च ॥

इयं चोत्तरपदाधिकारस्थबहिरङ्गस्य नासिद्धत्वबोधिकेतीच एकाचो ऽम्

१० [६.३.६८] इति सूत्रे भाष्ये पूर्वपक्ष्युक्तिरिति सा नादर्तव्या । परंतप इत्यादावनुस्वारे नासिद्धत्वं मुमस्त्रिपाद्यां तदप्रवृत्तेः ॥ नव्यमते ऽपि यथोद्देशपक्षाश्रयणेनान्यथासिद्धोदाहरणदानेन तस्य तदुक्तित्वमावश्यकमित्याहुः ॥ आभीये ऽन्तरङ्गे आभीयस्य बहिरङ्गस्य समानाश्रयस्य नानेनासिद्धत्वमसिद्धत्वादित्यसिद्धवत्सूत्रे भाष्ये स्पष्टम् ॥ एवं सिचि वृद्धेर्येननाप्राप्तिन्यायेनान्तरङ्ग-

१५ बाधकत्वमूलकं न सिच्यन्तरङ्गमस्तीतीको गुण [१.१.३] इति सूत्रे भाष्ये स्पष्टम् ॥ ५० ॥

---

१ C. पूर्वप्रवृत्तिकत्व°; B. पूर्वप्रवृत्तिनिमित्तकत्वमपि अन्तर°

२ B. निमित्तत्वाभा°.

३ C. om. लुकि—विन्मतोः.

४ B. °प्रवृत्त्यर्थं जाति°.

६ C.P. बहिरङ्गासिद्ध°; B. बहिरङ्गत्वासिद्ध°.

९ C. °पदाधिकारस्थबहि°; B. °पदाधिकारस्य बहि°.

१० C. °रिति सा नादर्तव्या; B. om. सा.

११ C. om. समानाश्रयस्य.

१४ B. सिचि वृद्धौ येन°.

नन्वेवमक्षद्यूरित्यादौ बहिरङ्गस्योठो ऽसिद्धत्वादन्तरङ्गो यण् न स्यादत आह ।

## नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ॥ ५१ ॥

अत्र षत्वतुकोः [ ६.१.८६ ] इति सूत्रस्थं तुग्ग्रहणं ज्ञापकम् । अन्यथाधीत्य प्रेत्येत्यादौ समासोत्तरं ल्यप्प्रवृत्त्या पूर्वं समासे जाते तत्र संहिताया ५
नित्यत्वाल्ल्यबुत्पत्तिपर्यन्तमप्यसंहितयावस्थानासंभवेनैकादेशे ल्यपि तुगपेक्षया पदद्वयसंबन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गतयासिद्धत्वेन तद्वैयर्थ्यं स्पष्टमेव । पदद्वयसंबन्धिवर्णद्वयापेक्षं बहिरङ्गमिति प्रेद्ध इत्यादौ गुणो बहिरङ्ग इति ग्रन्थेन न धातुलोपे [ १.१.४ ] इति सूत्रे संयोगान्तस्य लोपः [ ८.२.२३ ] इति सूत्रे च भाष्ये स्पष्टम् ॥ यत्तु षत्वग्रहणमपि ज्ञापकमन्यथा को ऽसिच- १०
दित्यादौ पदद्वयसंबन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गस्यैकादेशस्यासिद्धत्वेन षत्वाप्रवृत्तौ किं तेनेति तन्न । इणः पूर्वपदसंबन्धित्वेन षत्वस्यापि पदद्वयसंबन्धिवर्णद्वयापेक्षत्वेनोभयोः समत्वात् । एकादेशस्य परादिवत्त्वेनौसिचदित्यस्य पदत्वेन पदादित्वाभावान्न सात्पदाद्योः [ ८.३.१११ ] इत्यनेन निषेधः । नैपादिके ऽन्तरङ्गे कार्यकालपक्षे ऽपि बहिरङ्गपरिभाषाया अप्रवृत्तेः पूर्वमुपपा- १५
दितत्वाच्च ॥ परिभाषार्थस्त्वचो ऽन्यानन्तर्यनिमित्तके ऽन्तरङ्गे कर्तव्ये जातस्य बहिरङ्गस्य बहिष्ट्वप्रक्लृप्तिर्न । बहिष्पदेन बहिरङ्गम् । तस्य भावो बहिरङ्गत्वम् । तत्प्रयुक्तासिद्धत्वस्य न प्रक्लृप्तिः । न प्राप्तिरिति । असिद्धं बहिरङ्गमित्युक्त्वा नाजानन्तर्य इति वक्ष्यामीति भाष्योक्त्या तत्रत्यस्यान्तरङ्ग इत्यस्यानुवृत्ति-

---

७ B. °पेक्षस्यैकादेशस्य.

१३ C. परादिवत्त्वेनौ°; B. परादित्वेनौ°.

१४ C. निषेधः; B. षत्वनिषेधः.

१६ C. °न्तर्यनिमित्तके; B. °न्तर्यनिमित्ते.

१७ P. mentions the reading तस्य भावो बहिष्ट्वं बहिरङ्गत्वम्.

सूचनात् ॥ तेन पचावेदमित्यादौ न दोषः । अन्तरङ्गस्याच्स्थानिककार्यस्यै-
त्वस्यान्यानन्तर्यनिमित्तकत्वाभावात् ॥ जातस्य बहिरङ्गस्येत्युक्त्यायजे इन्द्रं
धियवीत्यादौ बहिरङ्गदीर्घगुणादेरसिद्धत्वं सिद्धम् । अत एवेण्ङ्शीनामाद्गुणः
सवर्णदीर्घत्वाच्छचङन्तस्यान्तरङ्गलक्षणत्वादित्यादि संगच्छते । अत एवोमा-
५ ङोश्च [ ६.१.९५ ] इत्याङ्ग्रहणं चरितार्थम् । तद्धि शिव आ इहीति स्थिते
परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गकार्यत्वेनान्तरङ्गत्वादाद्गुणे वृद्धिबाधना-
र्थम् ॥ न चाक्षद्यूरित्यत्र यणि कृत ऊटो ऽसिद्धत्वाद्धलि लोपापत्तिरिति वाच्य-
म् । अचो ऽन्यानन्तर्यनिमित्तके ऽन्तरङ्गे कर्तव्ये कृते च तस्मिन्यदन्तरङ्गं
प्राप्नोति तत्र च कर्तव्ये नासिद्धत्वमित्येतदर्थात् । असिद्धपरिभाषाया अनित्य-
१० त्वेन तद्वारणे त्वस्या वैयर्थ्यं तेनैव सिद्धेः ॥ अत एव नलोपः सुप् [ ८.२.२ ]
इति सूत्रे कृति तुग्ग्रहणं चरितार्थम् । अन्यथा वृत्रहभ्यामित्यादौ बहिर्भूतभ्या-
न्निमित्तकपदत्वाश्रयत्वेन बहिरङ्गतया नलोपस्यासिद्धत्वेन सिद्धेस्तद्वैयर्थ्यं स्प-
ष्टमेव । मम तु तुक्यजानन्तर्यसत्त्वान्न दोषः ॥ न चैवं सति ह्रस्वस्य पिति

---

४ C. सवर्णत्वाच्छ°.

४ B. °स्यान्तरङ्गत्वल°.

५ C. इत्याङ्ग्रहणं; B. इत्यत्राङ्ग्रहणं.

६ C. °रङ्गत्वादाद्गुणे; B. °रङ्गत्वाद्गुणे.

९ B. तत्र कर्तव्ये.

९ C. नासिद्धमिति.

९ P. °मित्येतदर्थात्; B.C. °मिति तदर्थात्.

१० B. अत एव च नलोपः.

१२ P. नलोपस्यासिद्धत्वेन; B. नलोपासिद्धत्वेन सिद्धेस्त°
C. नलोपासिद्धेस्त°.

१३ C. om. सति.

[ ६.१.७१ ] इति सूत्रस्थभाष्यविरोधः । तत्र हि ग्रामणिपुत्र इत्यत्रैको ह्रस्वो ऽङ्यः [ ६.३.६१ ] इति ह्रस्वे कृते तुकमाशङ्क्य ह्रस्वस्य बहिरङ्गासिद्धत्वेन समाहितम् । नाजानन्तर्य इत्यस्य सत्त्वे तत्र तदप्राप्तेरसंगतिः स्पष्टैवेति वाच्यम् । तेन भाष्येणास्या अनावश्यकत्वबोधनात् । एतज्ज्ञापकेनान्तरङ्गपरिभाषाया अनित्यत्वबोधनस्यैव न्याय्यत्वात् ॥ अत एवाचः परस्मिन् [ १. १. ५७ ] इति सूत्रे भाष्ये पटु ई आ इत्यत्र परयणादेशस्य तयासिद्धत्वात्पूर्वयणादेशः साधितः । अत एवैषा भाष्ये पुनः क्वापि नोल्लिखिता । अत एवान्तरङ्गपरिभाषामुपक्रम्य विप्रतिषेधसूत्रे ऽस्या बहूनि प्रयोजनानि सन्ति तदर्थमेषा परिभाषा कर्तव्या प्रतिविधेयं दोषेष्वित्युक्तं संप्रसारणाच्च [६.१. १०८] इति सूत्रे भाष्ये प्रतिविधानं च परिभाषाविषये ऽनित्यत्वाश्रयणमेवेति ध्वनितमित्यलम् ॥ ५१ ॥

नन्वेवं गोमत्प्रिय इत्यादौ पदद्वयनिमित्तकसमासाश्रितत्वेन बहिरङ्गं लुकं बाधित्वान्तरङ्गत्वाद्धलङ्यादिलोपे नुमादयः स्युरत आह ।

## अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते ॥५२॥

अत्र च प्रत्ययोत्तरपदयोश्च [ ७. २. ९८ ] इति सूत्रं ज्ञापकम् ।

१ C. om. तत्र.

४ P. एतज्ज्ञापके°; B.C. तज्ज्ञापके°

६ C. आ इत्यत्र; B. आ इति स्थिते.

६ P. तया; B.C. अनया; P. mentions the latter reading.

७ C. नोल्लेखिता.

८ B. बहुप्रयोजनानि.

१० B. ऽनित्यत्वमेवाश्रय°.

१३ C.P. °न्तरङ्गत्वाद्धल्°, B. °न्तरङ्गत्वेन हल्°.

१३ B. °पेन नुमादयः.

त्वत्कृतमित्यादौ लुगपेक्षयान्तरङ्गत्वाद्विभक्तिनिमित्तकेन त्वमावेकवचने [ ७. २. ९७ ] इत्यनेन सिद्ध इदं व्यर्थं सदेतज्ज्ञापकम् ॥ ननु तव पुत्रस्त्वत्पुत्र इत्यादौ तवममादिबाधनार्थं तदावश्यकमिति चेत् । एवं तर्ह्यन्त्यमपर्यन्तग्रहणानुवृत्तिस्तज्ज्ञापिकेति भाष्यकृतः ॥ युष्मदादिभ्य आचारक्विप्तु न संपूर्णसू-
५ त्रस्य ज्ञापकतापरभाष्यप्रामाण्याद्भ्रस्वनद्यापः [ ७. १. ५४ ] इति नुड्विधायकसूत्रस्यभाष्यप्रामाण्येन हलन्तेभ्य आचारक्विबभावाच्च । एवमेवैकार्थकाभ्यां प्रातिपदिकाभ्यां प्रातिपादिकणिचो ऽप्यनभिधानं बोध्यम् । एतेन तत्रादेशार्थं प्रत्ययग्रहणं चरितार्थमित्यपास्तम् ॥ ननु मपर्यन्तानुवृत्तिरपि सर्वादेशत्ववारणाय चरितार्था । न चोत्सर्गसमानदेशा अपवादा इति न्यायेनासिद्धवत्सूत्र-
१० स्थभाष्यसंमतेन मपर्यन्तस्यैवादेशो सिद्धे तदनुवृत्तिर्व्यर्थेति वाच्यं तस्य भ्रमकजादौ व्यभिचारादिति चेत् । न । भ्रमि मित्त्वेन बहुचि पुरस्ताद्ग्रहणेनाकचि प्राक्टेर्ग्रहणेन तस्य बाधेऽप्यत्रोत्सर्गस्य त्यागे मानाभावात् ॥ अत एव तस्मिन्नणि च [ ४. ३. २ ] इत्यनेन युष्माकाद्यादेशविधानं चरितार्थम् । अन्यथाकङादेशमेव विदध्यात् । अकङि तवकाद्यादेशयोरेतदपवादयोरुक्त्या-

---

२ P. सदेतज्ज्ञापकम्; B.C. सज्ज्ञापकम्; P. mentions the latter reading.

३ C.P. तर्ह्यन्त्यमपर्यन्तग्रहणानु°; B. तर्ह्यन्त्य मपर्यन्तानु°; P. mentions the reading तत्रत्य for अन्त्य.

६ B. एवमेवैकार्थाभ्यां प्रातिपदिकप्रकृतिकणिचो.

७ C.P. एतेन तत्रादे°; B. एतेनात्रादे°.

९ B. °समानदेशापवादा.

९ C. °वत्सूत्रस्थभाष्य°; B. om. स्थ.

१० C. भ्रमूबहुजक आदौ.

१३ C. युष्मकादेशादेश°.

येनान्त्यादेशत्वापत्तिः । अतस्तद्विधानमिदमेव च तज्ज्ञापकम् ॥ यद्यपि विरोधे बाधकत्वमिति वार्त्तिकमते ऽयं न्यायो भाष्यकारस्तु विनापि विरोधं सत्यपि संभवे बाधकत्वमिच्छतीत्यनभिहितसूत्रस्थकैयटरीत्या नायं नियमस्तथापि युष्माकाद्यादेशविधानज्ञापित उत्सर्गः स्वीक्रियत एवेति प्रकृते न दोषः । एतद्भाष्यमपि तत्स्वीकारे मानम् ॥ एवं च मपर्यन्तानुवृत्तिस्त्वत्कृतमित्यादौ ५
मपर्यन्तस्यादेशविधानार्था । तत्र चान्तरङ्गत्वात्त्वमौ [ ७. २. ९७ ] इत्येव सिद्धे व्यर्था सैतज्ज्ञापिका । ज्ञापिते त्वस्मिन्नेतद्विषये त्वादीनामप्राप्त्या तदपवादत्वाभावेन मपर्यन्तस्यैवादेशार्थं सा चरितार्थेति तदाशयः ॥ यत्तु हरदत्तेनान्तरङ्गप्रवृत्तौ प्रत्यय उत्तरपदे च मपर्यन्तासंभवेन तदनुवृत्तिर्व्यर्था सती ज्ञापिकेत्युक्तं तन्न । अन्तरङ्गाणामप्यपवादबाध्यत्वेन तद्विषये तदप्रवृत्तेः ॥ १०
वस्तुत इदं ज्ञापकं वार्त्तिकरीत्यैव भाष्यरीत्या तु वाचनिक एवायमर्थ इत्याहुः ॥ इयं सुपो धातु [ २. ४. ७१ ] इति लुग्विषयैवेति केचित् । एङ्ह्रस्वात्संबुद्धेः [ ६. १. ६९ ] न यासयोः [ ७. ३. ४५ ] इति सूत्रस्थाकरप्रामाण्येन लुग्मात्रविषया । आद्ये हे त्रपु इत्यादावनेन न्यायेन लोपं बाधित्वा लुग्भवतीति भाष्य उक्तम् । अन्त्ये ऽन्तरङ्गांश्च विधीन्सर्वो ऽपि लुग्बाधते न १५
सुब्लुगेव। अत एव सनीस्रंस इत्यादौ नलोपो न भवति। पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्व इत्यादावेकादेशात्प्रागेव टापो लुक् । अन्यथा कृतेकादे-

---

३ C. °सूत्रकैयट°.

५ B. om. एवं च.

६ C.P. °विधानार्था; B. °विधानार्थम्.

७ C. सा एतज्ज्ञापिका; B. सा तज्ज्ञापिका.

९ C. सती ज्ञापिके°; B. सती तज्ज्ञापिके°.

१३ C. इति सूत्रस्थाकर°; B. इत्यादिसूत्रस्थाकर°

१५ B. लुग्भविष्यतीति.

शस्य लुक्यकारश्रवणं न स्यादिति कैयट उक्तम् ॥ एतद्विरोधाद्यत्तद्राजस्य [२.४.६२] इति सूत्रे कैयटेनोक्तमङ्गानतिक्रान्तो ऽत्यङ्ग इत्यत्र सुपो लुकि बहुवचनपरत्वाभावात्तद्राजस्येति लुग्न स्यादिति शङ्कापरभाष्यव्याख्यावसरे ऽन्तरङ्गानपीति न्यायेनायं लुक् सुब्लुको बाधकः स्यादित्याशङ्क्य सुब्लुक एवानेन बलवत्त्वं बोध्यत इति तत्प्रौढ्येति द्रष्टव्यम् । लुगपेक्षया लुको बलवत्त्वस्य वक्तुमशक्यत्वादिति तदाशङ्कासमाधानं वक्तुं युक्तम् ॥ अनेन न्यायेनान्तरङ्गनिमित्तविनाशकलुकस्तत्प्रयोजकसमासादीनां च प्राबल्यं बोध्यत इत्यन्यत्र विस्तरः ॥ ५२ ॥

नन्वेवं सौमेन्द्रे ऽन्तरङ्गत्वादाद्गुणे पूर्वपदात्परेन्द्रशब्दाभावेन नेन्द्रस्य परस्य [७. ३. २२] इति वृद्धिनिषेधो व्यर्थः । अन्तादिवद्भावस्तूभयत आश्रयणे निषिद्धः । किंच वृद्धिरप्यत्र न प्राप्नोत्यन्तादिवत्त्वोभयाभावे ऽपि पूर्वान्तवत्त्वेनैकादेशविशिष्टे पूर्वपदत्वेन न्द्रशब्दस्यैकदेशविकृतन्यायेनोभयत आश्रयणे

---

१ C. एतद्विरोधात्तद्राज°; B. तद्विरोधाद्यत्तद्राज°.

५ B. बलत्वं.

५ B. इति प्रौढ्येति C. तत्प्रौढ्येति.

६ P. °दिति तदाशङ्का°; C. °दिति शङ्का°; thus also originally in B.

९ P. सौमेन्द्रे; B.C. सोमेन्द्रे

९ C. °द्गुणे पूर्व°; B. °द्गुणे कृते पूर्व°

१० B. °भयताश्रयणे.

११ C. पूर्वान्तत्वेनैका°.

१२ P. °पदत्वेन न्द्रशब्द°; B. °पदत्वेन इशब्द°; C. °पदत्वेनेन्द्रशब्द°; P. mentions the reading न्द्रशब्द°

१२ B. °भयताश्रयणे.

नान्तादिवदित्यस्याभावेन तदाश्रयेण वोत्तरपदत्वे ऽपि तस्यानच्कत्वादेकस्यै-
कादेशेन परस्य नित्येन यस्य [६. ४. १४८] इति लोपेनापहारात्। न
च परादिवद्भावेनैकादेशविशिष्टस्योत्तरपदत्वमेवास्त्विति तत्संभव इति वाच्यम्।
उत्तरपदाद्यच्स्थानिकत्वाद्वृद्धेस्तदभावेनाप्राप्तेस्ताद्रूप्यानतिदेशात्। अन्यथा
खट्वाभिरित्यादावपि पूर्वान्तवत्त्वेनादन्तत्वे भिस ऐसापत्तिरिति भाष्ये स्पष्टम्। ५
अत एव पूर्वैषुकामशम इत्यादावन्तरङ्गत्वादाद्गुणे वृद्धिर्न स्यादित्याशङ्कितम्।
तदेकदेशमात्रस्य विकाराभावाच्च॥ तदुक्तं भाष्य इन्द्रे द्वावचावेको यस्येति
लोपेनापहृतो ऽपर एकादेशेन ततो ऽनच्क इन्द्रः संपन्नस्तत्र कः प्रसङ्गो
वृद्धेरिति॥ मरुदादिभिरिन्द्रस्य द्वन्द्व इन्द्रस्यैव पूर्वनिपातो ऽत आह।

पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गो ऽप्येकादेशो न॥५३॥ १०

अत्र च नेन्द्रस्य [७. ३. २२] इति निषेध एव ज्ञापक इत्यन्तादिवच्च
[६. १. ८५] विप्रतिषेधे परम् [१. ४. २] इति सूत्रयोर्भाष्ये स्पष्टम्
॥ ५३ ॥

---

१ P. तदाश्रयेण वो°; C. तदाश्रयणेन चो°; B. °वदिति निषेधा-
भावेन तदाश्रयेण चो°.

१ B. om. ऽपि.

२ B. नित्यत्वेन यस्य.

५ B. पूर्वान्तत्वेनाद°.

६ C. °त्वादाद्गुणे; B. °त्वादाद्गुणे कृते.

८ C. and Bhâshya इन्द्रः संपन्नः; B. इन्द्रशब्दः संपन्नः.

९ B. °दिभिरिन्द्रशब्दस्य.

११ B.P. अत्र च; C. om. च.

११ C. °पक इत्यन्तादिवच्च; B. °पकमित्यन्तादिवच्च.

नन्वेवमपि अभाय प्रस्थायेत्यादावन्तरङ्गत्वाद्धित्वादिषु कृतेषु ल्यप्स्यादत आह ।

**अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब्बाधते ॥ ५४ ॥**

अदो जग्धिः [ २. ४. ३६ ] इति सूत्रे कितीत्येव सिद्धे ल्यब्ग्रहणमस्या ५ ज्ञापकमित्यदो जग्धिरित्यत्र भाष्ये स्पष्टम् ॥ ५४ ॥

नन्वेवमपीयायेत्यादौ द्वित्वे कृते ऽन्तरङ्गत्वात्सवर्णदीर्घत्वे तदसिद्धिरत आह ।

**वार्णादाङ्गं बलीयो भवति ॥ ५५ ॥**

तेनान्तरङ्गमपि सवर्णदीर्घं बाधित्वा वृद्धिरिति तत्सिद्धिः ॥ अभ्यासस्या- १० सवर्णे [ ६.४.७८] इतीयङ्विधायकसूत्रस्थमसवर्णग्रहणमस्या ज्ञापकम् । त- द्धीषतुरित्यादावियङादिव्यावृत्त्यर्थम् । एतत्परिभाषाभावे त्वोषतुरित्यादावन्त- रङ्गेण सवर्णदीर्घेण बाधात्तद्व्यर्थम् । इयङुवङौ ह्यभ्याससंबन्धनिमित्तकत्वाद्बहि- रङ्गौ । न चेयङादिरपवादो येननाप्राप्तिन्यायेनेयर्तीत्यादिसकललक्ष्यप्राप्त- यणपवादत्वस्यैव निर्णयादिति प्राञ्चः ॥

१५ परे त्वेतत्परिभाषाभावे ऽभ्यासस्येति सूत्रमेव व्यर्थम् । न चेयेषयायेत्यादौ चरितार्थम् । तयोरपि पूर्वप्रवृत्तगुणस्य पूर्वप्रवृत्तवृद्धेश्च द्विर्वचने ऽचि

---

१ B.P. प्रस्थायेत्यादावन्तर°; C. प्रस्थायेत्यत्रान्तर°.

१ B. °द्वीत्वादिषु.

१ C. स्यादत आह; B. स्यादित्यत आह.

६ P. नन्वेवमपी°; B.C. नन्वेवमि°.

११ C. तद्धीषतुरित्यादावियङ्व्याव°; B. तद्धीषतुरित्यादावियङादिव्यावृ°; P. °यङादिव्यावृ°.

११ C. त्वीषतुरित्यादाव°; B. त्वन्तरङ्गेण.

१२ P. न चेयङादिरप°; B.C. न चेयङ्गःप°.

१४ B. °पवादस्यैव.

[१.१.५९] इति स्थानिवद्भावातिदेशेनापहारे द्वित्वे कृते पुनः प्राप्ते गुणवृद्धी बाधित्वान्तरङ्गत्वात्सवर्णदीर्घापत्तेः ॥ न चेयर्तीत्यादौ तच्चरितार्थम् । तावन्मात्रप्रयोजनकत्व उरित्येव ब्रूयात् । य्वोरित्यनुवर्तते । इणो यण् [६.४.८१] इति साहचर्याद्व्याख्यानाच्च ऋधातोरेव ग्रहणम् । अर्तेरिवर्णस्येयङित्यर्थः । अभ्यासस्यार्तावित्यभ्यासस्यार्तेरिति वा गुरुत्वान्न युक्तम् ॥ न च ए ऐ ओ औशब्देभ्य आचारक्विबन्तेभ्यो लिटोयङाद्यर्थं तत्सूत्रमावश्यकं तथा ओण्धातोर्ण्वुलन्तादिच्छाक्यजन्तात्सन्युवोणकीयिषतीत्याद्यर्थमावश्यकमिति वाच्यम् । षाष्ठप्रथमाह्निकान्तस्थभाष्यप्रामाण्येन तेषामनभिधानात् । अन्त्ये द्वितीयद्विर्वचनस्यैव सत्त्वेन त्वदुक्तप्रयोगस्यैव दुर्लभत्वात् । एवं च संपूर्णसूत्रस्य ज्ञापकता युक्ता ॥ यद्यपि भाष्ये यदयमभ्यासस्यासवर्ण इत्यसवर्णग्रहणं करोतीति ग्रन्थेनासवर्णग्रहणस्यैव ज्ञापकता लभ्यते तथापि न ह्यन्तरेण गुणवृद्धी असवर्णपरो ऽभ्यासो भवतीति तदुपपादनग्रन्थेन संपूर्णसूत्रस्यैव ज्ञापकता लभ्यते । अग्रे ऽपि नैतदस्ति ज्ञापकमर्थ्यर्थमेतत्स्यादित्यनेन सूत्रसार्थक्यमेव दर्शितमसवर्णग्रहणस्यैव ज्ञापकत्वे तु तद्व्यावर्त्यप्रदर्शनेन तत्सार्थक्यमेव दर्शितं स्यात् ॥ न चाकृतपरिभाषयेयेषेत्यादौ सवर्णदीर्घप्राप्तिर्यदि दीर्घो न

१ B. इति सूत्रातिदेशेना°.

२ C.P. °दौ तच्चरितार्थम्; B. om. तत्.

२ B. °प्रयोजक°.

४ B.C. अर्तेर्ॠवर्णस्य; P. evidently reads अर्तेरिवर्णस्य.

७ P. mentions that some read अपि between आदि and षाष्ठ°.

८ B. पाष्ठप्रथमाह्निकस्थ°.

११ B.C. °वृद्ध्यसवर्ण°; but Bháshya ad VI, 1, 12 °वृद्धी असवर्ण°.

१५ P. चाकृतपरि°; B.C. चाकृतव्यूहपरि°.

स्यात्तर्हि गुणः स्यादिति संभावनायाः सत्त्वेन परिभाषाप्रवृत्तेः सूपपादत्वादिति कथं संपूर्णसूत्रस्य ज्ञापकतेति वाच्यम् । तस्या असत्त्वात् । सत्त्वे वैतद्भाष्यप्रामाण्येन यत्रान्तरङ्गकार्यप्रवृत्तियोग्यकालोत्तरमेव तन्निमित्तविनाशकबहिरङ्गविधेः प्राप्तिस्तत्रैव तत्परिभाषाप्रवृत्तिस्वीकाराच्च ॥ न चान्तरङ्गत्वाद्दीर्घे ऽपी-
५ पयेत्यादौ पूर्वान्तवत्त्वेनाभ्यासत्वादिवर्णत्वाच्च णल्यसवर्ण इयङ्विधानेन सूत्रं चरितार्थं न चाचि श्नु [६. ४. ७७] इत्यनेन सिद्धिर्वृद्धिबाधनार्थत्वादिति वाच्यम् । प्रत्यासत्त्यासवर्णपदेनाभ्यासोत्तरखण्डसंबन्ध्यसवर्णाच एव ग्रहणाच्छास्त्रबाधकल्पनापेक्षया परिभाषाज्ञापकत्वस्यैवौचित्याच्चेत्याहुः ॥

सा चेयं धर्मिग्राहकमानादाङ्वर्णयोः समानकार्यिकत्व एव । यत्तु
१० समाननिमित्तकत्वरूपसमानाश्रयत्व एवैषेति तन्न ज्ञापिते ऽपीयायेयेषेत्याद्यसिद्धेः सूत्रवैयर्थ्यस्य तदवस्थत्वाच्च ॥ स्योन इत्यत्र तु वक्ष्यमाणरीत्यास्या अनित्यत्वादप्रवृत्तौ गुणादन्तरङ्गत्वाद्यणादेशः ॥ न चैवमपीयायेत्यादावियङ् दुर्लभस्तत्र कर्तव्ये वृद्ध्यादेः स्थानिवत्त्वेनासवर्ण इति प्रतिषेधादिति वाच्यम् । सूत्रारम्भसामर्थ्यादेव स्थानिवत्त्वाप्रवृत्तेः । तच्च सामान्यापेक्षमभ्यासकार्ये त-
१५ दुत्तरखण्डादेशस्य तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं नेति । अत एवारतीत्यादौ यणादेशस्य स्थानिवत्त्वादभ्यासस्य ढ्रलोपे [६. ३. १११] इति दीर्घो दुर्लभ इत्यपास्तम् । दीर्घविधौ तन्निषेधाच्च । अरिप्रियादित्यत्र तु स्था-

५ B. पूर्वान्तत्वेना°.
५ C. °सत्वादिवर्णाच्च.
८ C.P. °चित्याच्चेत्याहुः; B. om. इत्याहुः.
९ C.P. °कार्यिकत्व एव; B. °कार्यित्व एव.
१० B. तन्न ज्ञापिते इयेषे°.
११ B.P. °रीत्यास्या अनि°; C. °रीत्यास्यानि°
१४ B. °भ्यासस्य कार्ये तदुत्तरं ख°.
१७ C. °दित्यत्र तु स्थानि°; B. om. तु.

निवृत्त्वेनेयङ् भवत्येव तस्य स्थानिवत्त्वस्याभ्यासकार्यप्रतिबन्धकत्वाभावात् ॥ इयं चाङ्गसंबन्धिन्याङ्ग एवेति स्वरितो वा [ ८. २. ६ ] इति सूत्रे भाष्ये। तत्र हि कुमार्यै इत्यादौ यणुत्तरमाडुक्तः ॥ इयं चानित्या च्छ्वोः [ ६. ४. १९ ] इति सतुग्निर्देशात्। अन्यथाङ्गत्वात्पूर्वं तुकः शादेशे तुको ऽप्राप्त्या तद्वैय-र्थ्यं स्पष्टमेवेत्यन्यत्र विस्तरः ॥ ५५ ॥ ५

नन्वेवं सेदुष इत्यादौ क्वसोरन्तरङ्गत्वादिटि ततः संप्रसारणे ऽपीटः श्रवणापत्तिरिति चेत्। अत्र केचित्।

## अकृतव्यूहाः पाणिनीयाः ॥ ५६ ॥

न कृतो विशिष्ट ऊहो निश्चयः शास्त्रप्रवृत्तिविषयो यैरित्यर्थः। भावि-निमित्तविनाश इत्यध्याहारः। बहिरङ्गेणान्तरङ्गस्य निमित्तविनाशे पश्चात्सं- १० भाविते ऽन्तरङ्गं नेति यावत् ॥ अत्र च ज्ञापकं समर्थानां प्रथमात् [ ४. १. ८२ ] इति सूत्रे समर्थानामिति। तद्धि सूत्थितादिभ्यः कृतदीर्घेभ्यः प्रत्ययोत्पत्त्यर्थम्। अन्यथान्तरङ्गत्वाद्दीर्घे कृत एव प्रत्ययप्राप्त्या तद्व्यर्थता स्पष्टैव। तत्र हि भाविन्यादिवृद्ध्या सवर्णाच्त्वविनाशः स्पष्ट एव ॥ न चात्रैकादेशप्रवृत्तिसमये वृद्ध्यप्राप्त्यैकादेशे कृत आदेशे वृद्धेः प्राप्तावपि तन्निमित्तवि- १५

४ C. अन्यथान्तरङ्गत्वात्पूर्वं.

६ C. संप्रसारणे ऽपीटः; B. om. अपि.

९ C. न कृत ऊहो विशिष्टनिश्चयः.

१० C. बहिरङ्गेणान्तरङ्गविनाशे.

११ C.P. अत्र च ज्ञापकं; B. om. च.

१४ C.P. तत्र हि भावि°; B. om. हि.

१४ B. चात्रैकादेशे प्रवृत्ति°.

१५ C.om. आदेशे.

१५ B.P. तन्निमित्त°; C. निमित्त°

नाशाभाव इति वाच्यम् । तद्वारैव तन्निमित्तविनाशसत्त्वेनाक्षतेः ॥ न च सौत्थितौ बहिरङ्गतया वृद्धेरसिद्धत्वान्न तन्निमित्तविनाश इति वाच्यम् । समर्थग्रहणेनैतद्विषये तस्या अप्रवृत्तेरपि ज्ञापनात् ॥ यत्तु समर्थग्रहणेनान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यत इति तन्न । असिद्धपरिभाषया समकालप्राप्तबहिरङ्गस्य पूर्वजातबहिरङ्गस्य चान्तरङ्गे कर्तव्ये ऽसिद्धत्वं बोध्यते न तु जाते ऽन्तरङ्गे तस्य तत्त्वं बोध्यते मानाभावात्फलाभावाच्चैवं च सूत्थितादावेकादेशस्य परिभाषासाध्यत्वाभावेन तदनित्यत्वज्ञापनासंभवात् ॥ अन्तरङ्गानपि विधीनित्यादेरप्यस्यामेवान्तर्भावः ॥ एतत्प्रवृत्तौ च निमित्तविनाशसंभावनापि निमित्तम् । अत एव गोमद्दण्डीत्यादौ हल्ङ्यादिलोपो न । अन्यथा हल्ङ्यादिलोपकाले सामासिकलुको ऽप्राप्त्या तदुत्तरं चापहार्याभावादप्राप्त्या लोपस्यैवापत्तेः । अस्ति चात्रापि यदि लोपो न स्यात्तर्हि लुक् स्यादिति संभावना ॥ अल्लोपो ऽनः [६. ४. १३४] इति सूत्रस्थतपरकरणं तु परिभाषानित्यत्वज्ञापनेन चरितार्थम् । तद्ध्यान इत्यादौ लोपवारणाय । अन्यथा दीर्घाभावे लोपसंभावनयैतत्परिभाषाबलाद्दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेवेत्याहुः ॥

समर्थानामिति सूत्रे कैयटस्तु समर्थवचनेनेयं परिभाषा ज्ञाप्यते ऽकृतव्यूहाः पाणिनीया इति तेन पपुष इत्यादावन्तरङ्गत्वात्पूर्वं कृतो ऽपीडागमो निवर्तत इति वदन्न कृतो व्यूहो विशिष्टस्तर्को निमित्तकारणविनाशे ऽपि कार्यस्थितिरूपो यैरित्यर्थमभिप्रैति । निमित्तापाये नैमित्तिकस्याप्यपाय इति

---

२ C. °द्धत्वान्न निमित्त°.

३ B. तस्या ऽप्रवृ°.

५ C. पूर्वजात°; B. पूर्वं जात°.

११ B.C.P. अस्ति चात्रापि; P. says that some om. च.

१४ C. °संभावनयैव तत्परि°.

१७ B. °स्तर्कनिमित्तकारणनाशे.

१८ B. नैमित्तकस्या°.

यावत्। सूत्थितादिञि वृद्धौ दीर्घनिवृत्तौ सावुत्थितिर्माभूदिति समर्थानामिति॥ लोकन्यायसिद्धश्चायमर्थः। तथा हि लोके निमित्तं द्विविधं दृष्टम्। कार्य-स्थितौ नियामकं तदनियामकं च। आद्यं यथा न्यायनये ऽपेक्षाबुद्धिस्तन्नाशे तद्द्वित्वनाशाभ्युपगमात्। वेदान्तनये प्रारब्धस्य विक्षेपस्थितिनियामकत्वं च प्रसिद्धमेव। द्वितीयं यथा दण्डादि तन्नाशे ऽपि घटनाशादर्शनात्। शास्त्रे ५ लक्ष्यानुरोधाद्व्यवस्था॥ भाविनिमित्तविनाशे पूर्वमनुत्पत्तौ तु न कश्चिन्न्यायो नापि संप्रतिपन्नो दृष्टान्तः। समर्थानामित्यस्यापि लोकसिद्धार्थज्ञापनेन चारि-तार्थ्यसंभवे लोकासिद्धापूर्वतादृशार्थज्ञापकत्वे मानाभाव इति तदाशय इति बोध्यम्॥

परे तु सेदुष इत्यादौ पदावधिके ऽन्वाख्याने सेद् वस् अस् इति स्थित १० इट्संप्रसारणयोः प्राप्तयोः प्रतिपदविधित्वात्पूर्वं संप्रसारणे वलादित्वाभावादि-टः प्राप्तिरेव नेति तत्सिद्धिरिति समर्थानामिति सूत्रे कैयटे ऽसिद्धवत्सूत्रे च कैयटे स्पष्टमेतत्। यद्यपि प्रतिपदविधित्वमनवकाशत्वे सत्येव बाधकत्वे बीजं तथापि पूर्वप्रवृत्तौ सावकाशत्वे ऽपि नियामकं भवत्येवेति तदाशयः।

---

१ C. सूत्थितादिञि वृद्धौ; B, सूत्थितादिञि आदिवृद्धौ.

२ C. कार्यस्य स्थितौ.

५ C. शास्त्रेषु लक्ष्या°

६ B. भाविनाशे.

८ P. इति बोध्यम्; B.C. om. बोध्यम्; the latter reading is mentioned by P.

१० C. °वधिकान्वाख्याने.

११ C. °योः प्राप्तौ प्रतिपदविधानाच्च पूर्वं.

१२ B. °रिति स्पष्टं समर्था°.

१२ B. °त्सूत्रे कैयटे च स्पष्टमेव तत्.

निरूपितं चैतद्बहुशः शब्देन्दुशेखरे ॥ समर्थानामिति सूत्रस्थसमर्थग्रहणं तु
विधुग इत्यादावकृतसंधेः प्रत्ययदर्शनेन सर्वत्र तथाभ्रमवारणाय न्यायसिद्धा-
र्थानुवाद एव ॥ ध्वनितं चेदं विप्रतिषेधसूत्रे भाष्ये । तत्र हि वैक्षमाणिरि-
त्यन्तरङ्गपरिभाषोदाहरणमुक्तम् । किंच विभज्यान्वाख्याने सु उत्थित अस्
५ इ इति स्थिते वार्णादाङ्गं बलीय इति प्राप्तवृद्धिवारणाय समर्थग्रहणमित्यत्रैव
सूत्रे कैयटे स्पष्टम् ॥ अत एवासिद्धवत्सूत्रे वसुसंप्रसारणमज्विधौ सिद्धं व-
क्तव्यं पपुष इत्यादौ वसोः संप्रसारणे कृत आतो लोपो यथा स्यादिति भाष्य
उक्तम् । पदस्य विभज्यान्वाख्याने पूर्वोक्तकैयटरीत्या पूर्वं संप्रसारण इटो
ऽप्राप्तावसुनिमित्तक एवातो लोप इति तदाशयः । अन्यथान्तरङ्गत्वादिटि
१० तन्निमित्तक एवातो लोप इति तदसंगतिः ॥ अत एव चौ प्रत्यङ्गस्य प्र-
तिषेध इति वचनं वार्त्तिककृतारब्धं भाष्यकृता च न प्रत्याख्यातम् । प्रत्य-
ङ्गमन्तरङ्गम् । अस्यां परिभाषायां सत्यां तु तद्वैयर्थ्यं स्पष्टमेव ॥ अत एव
च्छ्वोः [६. ४. १९] इति सूत्रे ऽवश्यमत्र तुगभावार्थो यत्नः कार्यो ऽन्त-
रङ्गत्वाद्धि तुक् प्राप्नोतीति भाष्य उक्तम् । एतत्सत्त्वे तु तुको ऽप्राप्त्या य-
१५ त्नावश्यकत्वकथनमसंगतमिति स्पष्टमेव । न चैतदनित्यत्वज्ञापनार्थमेव तादिति
तदाशयो ऽवश्यमत्रेत्यक्षरस्वारस्यभङ्गापत्तेः ॥ किंचानयैव प्रत्ययोत्तरपदयो-

---

३ B. तत्र वैक्षमाणि°.

४ C. °त्यन्तरङ्गोदाहरण°.

४ C. सु उत्थित अस् इति.

५ B. प्राप्तवृद्धेर्वारणाय.

६ B. om. सूत्रे.

१३ B. तुकाभावार्थो.

१५ P. न चैतद्ध्यनित्य°; B. न च तदनित्यत्वज्ञापनार्थमेतदिति; C. न च तदनित्यत्वज्ञापनार्थमेव तादिति.

श्च [ ७. २. ९८ ] अदो जग्धिर्ल्यप्ति किति [ २. ४. ३६ ] इत्यनयोश्चा-
रितार्थ्येन तज्ज्ञापकवशाल्लुग्ल्यपोरन्तरङ्गबाधकता भाष्योक्ता भज्येत ॥

किंचैषा भाष्ये न दृश्यते । तदुक्तमसिद्धवत्सूत्रे कैयटेन । निमित्तापाये
नैमित्तिकस्याप्यपाय इति परिभाषाया भाष्यकृतानाश्रयणादिति ॥ पदसंस्का-
रपक्षे हरिरित्यादौ विसर्गे कृते ततो गच्छतीत्यादिसंबन्धे हरिः गच्छती- ५
त्यादेव साधु । तद्विषये पदसंस्कारपक्षानाश्रयणं वेति दिक् ॥ ५६ ॥

## अन्तरङ्गादप्यपवादो बलीयान् ॥ ५७ ॥

तत्रापवादपदार्थमाह । येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको
भवति । प्राप्त इति भावे क्तः । येन नाप्राप्त इत्यस्य यत्कर्तृकावश्यकप्राप्ता-
वित्यर्थो नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् । एवं च विशेषशास्त्रोद्देश्य- १०
विशेषधर्मावच्छिन्नवृत्तिसामान्यधर्मावच्छिन्नोद्देश्यकशास्त्रस्य विशेषशास्त्रेण
बाधः । तदप्राप्तियोग्ये ऽचारितार्थ्यं ह्येतस्य बाधकत्वे बीजम् ॥ किंचानेन
न्यायेन तत्प्रवृत्त्युत्तरमपि चारितार्थ्ये तद्बाधबोधनम् । अन्यथानवकाशत्वे-
नैव बाधे सिद्ध एतत्कथनस्यैव वैयर्थ्यापत्तेस्तक्रकौण्डिन्यन्यायप्रदर्शनस्यापि

---

१ B. किति अनयो°.

२ B. लुको ल्यपश्चान्तरङ्ग°.

३ C. कैयटे.

३ B. निमित्ताभावे नैमित्तिकस्याप्यभाव.

५ C. विसर्गादौ कृते.

९ B. °वश्यकं प्राप्ता°; C. °वश्यप्राप्ता°.

१३ P. तत्प्रवृत्त्युत्तरमपि चारितार्थ्ये; B. C. तत्प्रवृत्त्युत्तर चारितार्थ्य अपि;
P. mentions the latter reading.

१३ B. तद्बाधबोधनम्; C. बाधबोधनम्.

१४ C. तत्कथनवैयर्थ्यापत्तेः । तक्रकौण्डिन्यन्यायवैयर्थ्यापत्तेश्च.

वैयर्थ्यापत्तेश्च । यथा प्रथमद्विर्वचनस्य तदुत्तरं सावकाशेनापि द्वितीयद्विर्वचनेन बाधः । यथा वादेरपि प्रवृत्त्या चरितार्थेनादेः परस्य [१.१.५४] इत्यनेनालो ऽन्त्यस्य [ १.१.५२ ] इत्यस्य बाधः ॥ तदुक्तं मिदचो ऽन्त्यात् [ १.१.४७ ] इति सूत्रे भाष्ये सत्यपि संभवे बाधनं भवतीति । अ-
५ न्यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यत्र तक्रदानेन दधिदानस्य बाधो न स्यात्तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्यसंभवात् ॥ अत एवायादयः [ ३.१.३१ ] इति सूत्रे गोपायिष्यतीत्यादावायादीन्बाधित्वा परत्वात्स्यादयः प्राप्नुवन्तीत्याशङ्क्यानवकाशा आयादयः । गोपायतीत्यादावपि शप् स्यादिः प्राप्नोति । न च सति शप्यसति वा न विशेषः । अन्यदिदानी-
१० मिदमुच्यते नास्ति विशेष इति । यदुक्तमायादीनां स्यादिभिरप्राप्तौ ऽवकाश इति स नास्त्यवकाश इति भाष्य उक्तम् ॥ एवमत्र तत्प्रवृत्त्युत्तरं चारितार्थ्ये ऽपि तदप्राप्तौ ऽवकाशो नास्तीति सममेव ॥ अत एव विषयभेदे ऽप्यपवादत्वम् । अत एवाचि रादेशेन नुटो ऽप्यपवादत्वाद्बाधमाशङ्क्य न तिसृ [ ६.४.४ ] इति ज्ञापकेन समाहितं तृज्वत्सूत्रे भाष्ये । तेन विषयभेदे ऽपवादत्वाभाव एव
१५ बोध्यत इति कश्चित्तन्न । विन्मतोर्लुका टिलोपमात्रस्य बाधानापत्तेः ॥ यत्तु दयतेर्दिगि [ ७.४.९ ] इति सूत्रे द्वित्वोत्तरं दिग्यादेशस्य चारितार्थ्यं कैय-

---

२ B. यथा चादेरपि प्रवृत्त्या चारितार्थ्येनादेः.

४ C. ऽन्त्यात्सूत्रे.

८ B. om. प्राप्नुवन्ति.

८ B. गोपायतीत्यादौ शप्.

९ B. om. इदानीम्.

१४ B. तेन निषेधेन विषय°.

१४ B. एव तेन बोध्यत.

१५ B.° मात्रबाधानापत्तेः.

टेनोक्तं तत्प्रौढ्या। ध्वनितं च तेनापि तस्य तथात्वं तदुत्तरग्रन्थेन॥ असंभव एव बाधकत्वं विरोधस्य तद्बीजत्वादिति वार्त्तिकमतं तु भाष्यकृता दूषितत्वान्न लक्ष्यसिद्ध्युपयोगि॥ तक्रकौण्डिन्यन्यायो ऽपि तदप्राप्तियोग्ये ऽचरितार्थविषयो विधेयविषय एव चेति तद्धितेष्वचामादेः [ ७.२.११७ ] धातोरेकाचः [ ३.१.२२ ] इत्यादिसूत्रेषु भाष्ये स्पष्टम्॥ क्वचित्तु सर्वथानवकाशत्वादेव बाधकत्वं यथा ङेरामो याडादिबाधकत्वम्। न हि याडादिषु कृतेषु ङेराम् प्राप्नोति निर्दिश्यमानस्य व्यवधानात्। तत्र स्वस्य पूर्वप्रवृत्तिरित्येव तेषां बाधः। तत्र बाधके प्रवृत्ते यद्युत्सर्गप्राप्तिर्भवति तदा भवत्येव यथा तत्रैव याडादयः। अप्राप्तौ तु न यथा पचेयुरित्यादौ दीर्घबाधके निरवकाश इयादेशे दीर्घाभावः॥ ५७॥

तदेतत्पठ्यते।

## क्वचिदपवादविषये ऽप्युत्सर्गो ऽभिनिविशत इति॥ ५८॥

अपवादशब्दो ऽत्र बाधकपरः॥ तदुक्तं गुणो यङ्लुकोः [ ७.४.८२ ] इत्यत्र भाष्ये। अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्ते। अजोगणत्। अत्र गणेरीत्वमपवादत्वाद्धलादिःशेषं न बाधते। न गणेरीत्वमपवादत्वाद्धलादिःशेषं बाधते। किं तर्हि। अनवकाशत्वादिति ग्रन्थेन। गणरूपाभ्यासान्त्यणस्येत्वमित्यर्थे हलादिःशेषेण तन्निवृत्तौ तदनवकाशमीत्वे तु कृते न तस्य

१ B. ध्वनितं चेदं तेनापि तस्य तथात्वमुत्तर°.

४ C. एव चेति; B. om. च.

८ C. °त्सर्गप्रवृत्तिरस्ति तदा भवत्येव.

१२ C. °त्सर्गो निविशत.

१३ C. °शब्दो ऽत्र बाधक°; B. om. अत्र.

१५ B. om. न गणेरी°—बाधते.

१७ P. mentions the reading तदनवकाशत्वमीत्वे.

१७ C. तु कृते °हलो ऽसंभवात्; B. कृते तु °हलो ऽभावात्.

प्राप्तिरन्त्यहलो ऽभावात् । अभ्यासविकारेषु बाध्यबाधकभावाभावेन च साधितम् । तस्मिंश्च सति लोपे कृते सामर्थ्याच्छिष्टस्यान्त्यस्येत्वमिति न दोषः । न च येननाप्राप्तिन्यायेनापवादत्वमप्यस्य सुवचं, तस्य चरितार्थविषयताया उक्तत्वात् ॥ इको झल् [ १.२.९ ] इत्यत्र भाष्ये ऽपि ध्वनितमेतत् । तत्र
५ ह्यज्झन [ ६.४.१६ ] इति दीर्घेण गुणोत्तरं फलाभावेनानवकाशत्वाद्गुणे बाधिते दीर्घोत्तरं गुणः स्याद्दीर्घविधानं तु मिनोतेर्दीर्घे कृते सनि मीमा [ ७ ४.५४ ] इत्यत्र मीग्रहणेन ग्रहणे ऽर्थवत्तत्र पश्चात्प्राप्तगुणबाधनार्थमिको झलिति किन्त्वमित्युक्तम् । अन्यथापवादत्वेन बाधे तद्विषय उत्सर्गाप्रवृत्तेर्भाष्यस्य सूत्रस्य चासंगतिरिति स्पष्टमेव ॥ यत्तु काञ्चनीत्यादावपवादमयाड्वि-
१० षये ऽप्यण्भवति क्वचिदपवादविषये ऽपीति न्यायादिति तन्न । अण् कर्मणि च [ ३.३.१२ ] इति सूत्रस्थभाष्यविरोधात् । तत्र ह्यणः पुनर्वचनमपवादविषये ऽनिवृत्त्यर्थं गोदायो व्रजतीत्याद्युक्तम् । काञ्चनीत्यादौ काञ्चनेन निर्मितेत्यर्थे शैषिको ऽण् बोध्यः ॥ अत्रेदं बोध्यम् । येन नाप्राप्तेत्यत्र येनेत्यस्य यदि स्वेतरेणेत्यर्थस्तदा स्वविषये स्वेतरद्यद्यत्प्राप्नोति तद्बाध्यं वि-
१५ ध्यन्तराप्राप्तविषयाभावात् । इयमेव बाध्यसामान्यचिन्तेति व्यवह्रियते । अनवकाशत्वेन बाधे ऽप्येषा वक्तुं शक्या यद्युदाहरणमस्ति विनिगमनाविरहात् ॥ यदि तु येनेत्यस्य लक्षणेनेत्यर्थः कार्येणेत्यर्थो वा तदा बाध्यविशेषचिन्ता ।

---

४ C. इत्यत्र भाष्ये; B. इति सूत्रे भाष्ये; P. भाष्ये ऽपि.

९ B. स्पष्टैव.

१२ B. काञ्चनेन निर्वृत्तेर्थे.

१४ B. स्वविषये यद्यत्प्राप्नोति.

१७ P. °र्थः कार्येणेत्यर्थो वा; B. °र्थो येन कार्येणेत्यर्थो वा; C. om. इत्यर्थः; both B.and C. have येन before लक्षणेन.

अनवकाशत्वेन बाधे ऽप्येतद्बाधेन सार्थक्यमुत तद्बाधेनेत्येवं विशेषचिन्ता संभवति यद्युदाहरणमिति ॥ ५८ ॥

तत्र कार्येणेत्यर्थे पररूपत्वावच्छिन्ने कार्ये आरभ्यमाणाया वृद्धेस्तद्बाधकत्वे निर्णीते किंशास्त्रविहितस्येत्येवं तद्विशेषचिन्तायामाह ।

पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान् ॥५९॥ ५

अवश्यं स्वपरस्मिन्बाधनीये प्रथमोपस्थितानन्तरबाधेन चारितार्थ्ये पश्चादुपस्थितस्य ततः परस्य बाधे मानाभाव आकाङ्क्षाया निवृत्तेर्विप्रतिषेधशास्त्रबाधे मानाभावाच्चेत्येतस्य बीजम् ॥ ५९ ॥

नासिकोदरौष्ठजङ्घादन्त [ ४.१.५५ ] इत्यस्यौष्ठाद्यंशे ङीषुनिषेधत्वावच्छिन्नबाधकत्वे निर्णीते किंविहितस्येत्याकाङ्क्षायामाह । १०

मध्ये ऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान् ॥ ६० ॥

तेनौष्ठादिषु पञ्चस्वसंयोगोपधादिति प्रतिषेध एव बाध्यते न तु सहनञ्विद्यमानलक्षण इति नासिकोदर [ ४.१.५५ ] इत्यत्र भाष्ये स्पष्टम् ॥ पूर्वोपस्थितबाधेन नैराकाङ्क्ष्यमस्या बीजम् ॥ ६० ॥

---

१ B. तद्बाधेन वेत्येवं विशेषचिन्तासंभवो.

२ B. P. °दाहरणमिति; C. °दाहरणमस्ति.

३ P. तत्र कार्येण; B.C. तत्र येन कार्येण.

३ B. कार्ये प्राप्त आरभ्यमाणावृद्धे°.

६ C. °रबाधनेन.

७ P. आकाङ्क्षाया नि°; B.C. आकाङ्क्षानि°.

८ P. °त्येतस्य; B.C. °ति तस्य.

९ C. °दन्तेत्यस्यौष्ठा°; B. °दन्तस्यौष्ठा°.

१० B. किंविहितेत्यस्याका°.

१२ C. सहनञ्लक्षण; B. °लक्षणेति

ननु वा च्छन्दसि [३.४.८८] इत्यनेन सेर्ह्यपिच्च [३.४.८७] इत्यनन्तरस्यापित्त्वस्यैव हेरपि विकल्पः स्यात्। तथा नेटि [७.२.४] इति निषेधोऽनन्तरहलन्तलक्षणाया इव सिचिवृद्धिमृजिवृद्ध्योरपि स्यात्। अतउक्तन्यायमूलकमेवाह।

५ **अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ॥ ६१ ॥**

अत एव संख्याव्ययादेः [४.१.२६] इति ङीब्ग्रहणं चरितार्थम्। तद्ध्यनन्तरस्य ङीषो विध्यभावाय। न क्तिचि [६.४.३९] इति सूत्रे दीर्घग्रहणं च चरितार्थम्। तद्ध्यनन्तरस्यानुदात्तोपदेश [६.४.३७] इत्यस्यैव निषेधाभावाय॥ मध्येऽपवादन्यायाद्यपेक्षयानन्तरस्येति न्यायः प्रबल इत्य-
१० ष्टाभ्यः [७.१.२१] इति सूत्रे कैयटः॥ प्रत्यासत्तिमूलकोऽयम्। लक्ष्यानुरोधाच्च व्यवस्थेत्यपि पक्षान्तरम्। तत्रतत्र क्वचित्स्वरितत्वप्रतिज्ञासामर्थ्येन वा बाध्यते ऽयं न्यायः। यथा टिड्ढ [४.१.१५] इति सूत्रेण डापा व्यवहितस्यापि ङीपो विधिः। न षट् [४.१.१०] इत्यादिना द्वयोरपि टाब्ङीपोः प्रतिषेधः॥ इयं च शि सर्वनामस्थानम् [१.१.४२] इत्यादौ भाष्ये स्पष्टे-
१५ त्यन्यत्र विस्तरः॥ ६१॥

ननु दधतीत्यादावन्तरङ्गत्वादन्तादेशे ऽल्विधौ स्थानिवत्त्वाभावाददादेशो न स्यादिति तद्वैयर्थ्यापत्तिरत आह।

---

३ B. मूलमेवाह.

८ C. °पदेशेत्यस्यैव; B. °पदेशस्येत्यस्यैव.

९ P. °न्यायाद्यपेक्षया; B.C. °न्यायापेक्षया.

१० P. लक्ष्यानुरोधाच्च; B.C. om. च.

११ C. पक्षान्तरम्। तत्र क्वचित्स्वरितत्वप्रतिज्ञानात्साम°.

१३ B. °स्यापि विधिर्ङीपः.

१४ C. इयं च शि; B om. च.

१७ C. न स्यादत आह.

पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः ॥ ६२ ॥

लक्षणैकचक्षुष्को ह्यपवादविषयं पर्यालोच्य तद्विषयत्वाभावनिश्चय उत्सर्गेण तत्तल्लक्ष्यं संस्करोति । अन्यथा विकल्पापत्तिरित्यर्थः । अभिनिविशन्त इत्यस्य बुद्ध्यारूढा भवन्तीत्यर्थः । अपवादो यद्यन्यत्र चरितार्थः [प° ६५] इति न्यायस्य तु नात्र प्राप्तिरन्तादेशाप्राप्तिविषये चारिताथ्याभावात् ॥ ६२ ॥ ५

लक्ष्यैकचक्षुष्कस्तु तच्छास्त्रपर्यालोचनं विनाप्यपवादविषयं परित्यज्योत्सर्गेण लक्ष्यं संस्करोति तस्यापि शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्तेः । तदाह ।

प्रकल्प्य वापवादविषयं तत उत्सर्गोऽभिनिविशते ॥ ६३ ॥

तत इत्यस्यापवादशास्त्रपर्यालोचनात्प्रागपीत्यर्थः । प्रकल्प्येत्यस्य परित्यज्येत्यर्थः ॥ ६३ ॥ १०

अत एव प्रातिपदिकार्थसूत्रे भाष्य इदं द्वयमप्युक्त्वा न कदाचित्तावदुत्सर्गो भवत्यपवादं तावत्प्रतीक्षत इत्यर्थकमुक्तम् ॥ एतन्मूलकमेव नवीनाः पठन्ति ।

उपसंजनिष्यमाणनिमित्तो ऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधत इति ॥ ६४ ॥ १५

यत्त्वभ्यस्तसंज्ञासूत्रे कैयटेन प्रकल्प्य वेति प्रतीकमुपादाय यथा न सं-

---

२ B. लक्षणचक्षुष्को.

५ B. नात्र प्रवृत्तिरन्तादेशा°.

६ B. तत्तच्छास्त्र°.

९ P. प्रकल्प्य वापवाद°; C. प्रकल्प्य चापवाद°; B. प्रकल्प्यापवाद°.

१२ B. °दुत्सर्गा भवन्त्यपवादं.

१४ B. उपजनि° उपजात°.

१६ Kaiyata ad VI, 1, 5 प्रकल्प्य वेति; B.C. प्रकल्प्य चेति.

प्रसारणे [ ६.१. ३७ ] इति परस्य यणः पूर्वं संप्रसारणं पूर्वस्य तु तन्नि-
मित्तः प्रतिषेध इत्युक्तं तत्तु तत उत्सर्ग इत्याद्यक्षरार्थानमुगुणम् ॥ यत्त्वपवा-
दवाक्यार्थं विना नोत्सर्गवाक्यार्थ इति तदर्थ इति तन्न । अभिनिविशन्ते
ऽपवादविषयमित्यादिपदस्वारस्यभङ्गापत्तेः । पदजन्यपदार्थोपस्थितौ वाक्यार्थ-
५ बोधाभावे कारणाभावाच्च ॥ यत्र त्वपवादो निषिद्धस्तत्रापवादविषये ऽप्युत्स-
र्गः प्रवर्तत एव यथा वृक्षावित्यत्र नादिचि [ ६.१. १०४ ] इति पूर्वस-
वर्णदीर्घनिषेधादप्रवर्तमानस्य वृद्धिबाधकत्वाभावाद्वृद्धिः प्रवर्तते । अत एव
तौ सत् [ ३. २. १२७ ] इत्यादि संगच्छते । अत एव निर्देशाद्दृष्टावस-
रन्यायस्यात्र शास्त्रे नाश्रयणम् । ध्वनितं चेदमिको गुण [ १. १. ३ ]
१० इति सूत्रे भाष्य इति भाष्यप्रदीपोद्योते निरूपितम् ॥ अत्र देवदत्तस्य हन्त-
रि हते देवदत्तस्योन्मज्जनं नेति न्यायस्य विषय एव नास्ति । हते देवदत्त
उन्मज्जनं न । देवदत्तहननोद्यतस्य तु हनने भवत्येवोन्मज्जनम् । प्रकृते
ऽपि न पूर्वसवर्णदीर्घेण वृद्धेर्हननं किंतु हननोद्यमसजातीयं प्रसक्तिमात्रं
प्रसक्तस्यैव निषेधात् ॥ प्रतिपदोक्तत्वमपि निरवकाशत्वे सत्येव बाधप्रयोज-
१५ कम् । स्पष्टं चेदं शेषाद्विभाषा [ ५. ४. १५४ ] इति सूत्रे भाष्ये । तत्र हि
शेषग्रहणमनर्थकं ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्तीत्याशङ्क्यान-
वकाशा हि विधयो बाधका भवन्ति समासान्ताश्च कबभावे सावकाशा इत्यु-
क्तम् । क्वचिदनवकाशत्वाभावे ऽपि परनित्यादिसमवधाने शीघ्रोपस्थितिकत्वेन
पूर्वप्रवृत्तिप्रयोजकं बलवत्त्वं प्रतिपदविधित्वेनापि । परनित्यान्तरङ्गप्रतिपद-

---

२ B. तत इत्याद्य°.

३ B. अभिनिविशते.

१२ C. तु हनने; B. हनने तु.

१३ B. °जातीयप्रसक्ति°.

विधयो विरोधिसंनिपाते तेषां मिथःप्रसङ्गे परबलीयस्त्वमिति प्रत्ययोत्तरपद-
योश्च [ ७. २. ९८] इति सूत्रे कैयटेन पाठात् । अत एव रमे इत्यादौ
प्रतिपदोक्तत्वात्पूर्वमेव आकारप्रश्लेषाद्धलूङ्याद्लोपो न प्राप्नोतीत्याशङ्क्यैङ्-
ह्रस्वात् [ ६. १. ६९ ] इति लोपेन समाहितम् ॥ ६४ ॥

नन्वयजे इन्द्रमित्यादावन्तरङ्गस्यापि गुणस्यापवादेन सवर्णदीर्घेण बाधः     ५
स्यादत आह ।

## अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते ॥ ६५ ॥

निरवकाशत्वरूपस्य बाधकत्ववीजस्याभावात् । एवं च प्रकृते ऽन्तरङ्गेण
गुणेन सवर्णदीर्घः समानाश्रये चरितार्थो यण्गुणयोरपवादो ऽपि बाध्यते ।
पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वविषय इदम् ॥ यत्त्वागमादेशयोर्न बाध्य-     १०
बाधकभावो भिन्नफलत्वादत एव ब्राह्मणेभ्यो दधि दीयतां कम्बलः कौण्डि-
न्यायेत्यादौ कम्बलेन न दधिदानबाध इति च्छ्वोः [६.४. १९] इति सूत्रे
कैयटस्तन्न । अपवादो नुग्दीर्घत्वस्येति दीर्घोऽकितः [७.४.८३] इति सूत्र-
स्थभाष्यविरोधात् ॥ ६५ ॥

नन्वजीगणदित्यादौ गणेरीत्वं निरवकाशत्वाद्धलादिःशेषं बाधेत तत्राह । १५

## अभ्यासविकारेषु बाध्यबाधकभावो नास्ति ॥ ६६ ॥

दीर्घो ऽकितः [७. ४. ८३] इत्यकिद्ग्रहणमस्या ज्ञापकम् । अन्यथा

---

३ C. आकारप्रश्लेषा°; ]          रस्य प्रश्लेषा°

८ B. बाधकवीज°.

९ B. °वादो बाध्यते.

१० P.B. °न्तरङ्गत्वविषय; C. °न्तरङ्गविषय.

११ B. कम्बलं.

१२ B. दधिदानस्य बाध.

१३ B. सूत्रभाष्य°

यथान्यत इत्यत्र नुकि कृते ऽनजन्तत्वाद्दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव ॥ इयं परान्तरङ्गादिबाधकानामप्यबाधकत्वबोधिका । तेनाचीकरत् मीमांसत इत्यादि सिद्धम् । आद्ये सन्वद्भावस्य परत्वाद्दीर्घेण बाधः प्राप्नोति। अन्त्ये मान्बध [३. १. ६] इति दीर्घेणान्तरङ्गत्वादित्त्वस्य बाधः प्राप्तः ॥ यत्तु यत्रैकैकप्रवृत्त्युत्त-रमपि सर्वेषां प्रवृत्तिस्तत्रैवेदमित्यत एक [६. ४. १२०] इति सूत्रे कैयटस्तन्न । नुकि कृते दीर्घाप्राप्त्या धर्मिग्राहकमानविरोधान्मान्बधादीनां दीर्घे कृत इत्त्वाप्राप्त्या गुणो यङ्लुकोः [ ७. ४. ८२ ] इति सूत्रस्थभाष्यो-क्ततदुदाहरणासंगतेश्चेत्यन्यत्र विस्तरः ॥ ६६ ॥

ननु तच्छीलादितृन्विषये ण्वुलपि स्यात् । न च तृन्नपवादो ऽसरूपापवादस्य विकल्पेन बाधकत्वात् । अत आह ।

## ताच्छीलिकेषु वासरूपविधिर्नास्ति ॥ ६७ ॥

ण्वुलि सिद्धे निन्दहिंसादिसूत्रेणैकाज्भ्यो वुञ्विधानमत्र ज्ञापकं तत्र ण्वुल्-वुञोः स्वरे विशेषाभावात् ॥ ताच्छीलिकेष्विति विषयसप्तमी । तेन ताच्छीलिकैर-ताच्छीलिकैश्च वासरूपविधिर्नेति बोध्यम् ॥ नन्वेवं कम्रा कमनेत्याद्यसिद्धिर्नमि-कम्पि [३. २. १६७] इति रेणानुदात्तेतश्च हलादेः [३. २. १४९] इति युचो बाधादिति चेत् । न । सूददीपदीक्षश्च [३. २. १५३] इत्यनेन दीपेर्यु-ज्निषेधेनोक्तार्थस्यानित्यत्वात् ॥ ६७ ॥

---

१ C. °दीर्घप्रवृत्तौ तद्वै°.

१ B. इयं च परान्तरङ्गादिबाधानाम°.

५ C. प्रवृत्तिस्तत्रैवैतत्प्रवृत्तिरित्यत्र.

६ B. °माने विरोधात्.

७ B.om. गुणो—सूत्रस्य°.

९ C. तच्छीलादि°; B. ताच्छीलादि°.

१२ B. °हिंसासूत्रे°.

१६ C. बाधादिति; B. बाध इति.

नन्वेवं हसितं छात्रस्य हसनमित्यादौ घजिच्छति भोक्तुमित्यत्र लिङ्लोटावीषत्पानः सोमो भवतेत्यत्र खलू प्राप्नोतीत्यत आह ।

क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति ॥ ६८ ॥

इदं च वासरूपविधेरनित्यत्वात्सिद्धम् । तदनित्यत्वे ज्ञापकं चार्हे कृत्यतृचश्च [३. ३. १६९] इति । तत्र हि चकारसमुच्चितलिङा कृत्यतृचो- ५
र्बाधा मा भूदिति कृत्यतृज्ग्रहणं क्रियत इत्यन्यत्र विस्तरः ॥ वासरूपसूत्रे भाष्ये स्पष्टा ॥ ६८ ॥

ननु श्वः पक्तेत्यत्र वासरूपविधिना लृडपि प्राप्नोति कृत आदेशो वैरूप्यादत आह ।

लादेशेषु वासरूपविधिर्नास्ति ॥ ६९ ॥ १०

आदेशकृतवैरूप्यवत्सु लकारेषु स नास्तीत्यर्थः ॥ अत्र च हशश्वतोर्लङ्च [३. २. ११६] इति लङ्विधानं ज्ञापकम् । अन्यथा परोक्षे लिट् [३.२. ११५] इति लिटा लङः समावेशो ऽसारूप्यात्सिद्ध इति किं लङ्विधानेन ॥ शत्रादिभिस्तिङां समावेशार्थं शतृविधायके विभाषाग्रहणानुवृत्तिर्लिटः कानज्वा [३. २. १०६] इति वाग्रहणं च कृतम् । तज्ज्ञापयति वासरूपसूत्रे १५
ऽपवाद आदेशत्वानाक्रान्तः प्रत्यय एव गृह्यत इति कैयटादौ ध्वनितम् । तत्फलं तु सदादिभ्यो भूतसामान्ये लिटः क्रसुरेव न तु पक्षे तिङ इति बोध्यम् ॥ ६९ ॥

---

१ B. भोक्तुमित्यर्थेलि°.

६ C. कृत्यतृच्ग्रहणं; B. कृत्यतृचोर्ग्रहणं.

७ C. स्पष्टा; B. स्पष्टैषा.

१२ C. om. लिट् इति.

१३ B. °त्सिद्धं इति.

१७ P. पक्षे तिङ इति; B.C. पक्षे तिङ्इति.

ननु ङमो ह्रस्वात् [८. ३. ३२] इत्यादौ ङमः परस्याचो ऽचि परतो ङम् इति वेति संदेहः स्यादत आह ।

## उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ॥ ७० ॥

अचीति सप्तमीनिर्देशस्य मय उञः [ ८.३.३३ ] इत्युत्तरत्र चारितार्थ्यात्पञ्चमीनिर्देशो ऽनवकाश इति तस्मादित्युत्तरस्य [ १.१.६७ ] इत्यस्यैव प्रवृत्तिः । यत्र तु ङः सि धुट् [ ८.३.२९ ] इत्यादावुभयोरप्यचारितार्थ्यं तत्र तस्मिन् [१. १. ६६] इति सूत्रापेक्षया तस्मादित्युत्तरस्य [ १. १.६७] इत्यस्य परत्वात्तेनैव व्यवस्था । एवमुभयोश्चारितार्थ्ये ऽपि यथामि सर्वनाम्नः [७. १. ५२] इत्यादौ । तत्रामीति सप्तमी त्रेस्त्रयः [७.१.५३]
१० इत्यत्र चारितार्था । आदिति पञ्चम्याज्जसेरसुक् [ ७.१.५० ] इत्यत्र चरितार्थेति स्पष्टं तस्मिन्निति सूत्रे भाष्ये कैयटे च ॥ ७० ॥

नन्वतः कृकमि [८.३.४६] इति सत्वमयस्कुम्भीत्यत्र न स्यात्कुम्भशब्दस्यैवोपादानादत आह ।

## प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ॥ ७१ ॥

१५ सामान्यरूपेण विशेषरूपेण वा प्रातिपदिकबोधकशब्दग्रहणे सति लिङ्गबोधकप्रत्ययविशिष्टस्यापि तेन ग्रहणं बोध्यम् । अपिना केवलस्यापीत्यर्थः ॥

---

२ B.C.P. ङम इति वेति संदेहः; P. mentions the reading ङमो वेति संदेहः.

१० C. इत्यत्र कृतार्था.

१० B. आत इति.

११ C. सूत्रे भाष्ये कैयटे च; B.om. भाष्ये.

१३ C. °शब्दस्योपादानादत आह.

१५ B. प्रातिपदिकशब्दग्रहणे सति लिङ्गबोधकस्य प्रत्यय°.

अस्याश्च ज्ञापकं समानाधिकरणाधिकारस्थे कुमार श्रमणादिभिः [२. १. ७०] इति सूत्रे स्त्रीलिङ्गश्रमणादिशब्दपाठः । स्त्रीप्रत्ययविशिष्टश्रमणादिभिश्च कुमारीशब्दस्यैव सामानाधिकरण्यं न तु कुमारशब्दस्येति तदेतज्ज्ञापकम् ॥ इयं च द्विषत्परयोः [३. २. ३९] इत्याद्युपपदविधौ समासान्तविधौ महदात्त्वे ञिन्नित्स्वरे राज्ञः स्वरे ब्राह्मणकुमारयोर्बहोर्नञ्वदुत्तरपदभूम्नि [६. २. १७५] इत्यादौ समाससंघातग्रहणेषु च न प्रवर्तत इति ङ्याप्सूत्रे भाष्ये स्पष्टम् । विभक्तिनिमित्तकार्ये च नेत्यपि तत्रैव ॥ तत्र समासान्तविधाववयवग्रहण एव न समाससंघातग्रहणे तु प्रवर्तत एव स्वरविधावेव समाससंघातग्रहणे तत्र दोषोक्तेः । बहुव्रीहेरूधसः [४.१२५] इति सूत्रभाष्याच्च ॥ एतावत्स्वेवानित्यत्वादप्रवृत्तिर्दोषाः खल्वपि साकल्येन परिगणिता इति भाष्योक्तेः ॥ नन्वेवं बहुव्रीहेरूधसो ङीष् [४.१.२५] इति सूत्रस्थभाष्यासंगतिः । तत्र हि कुण्डोध्नीत्यत्र नद्यृतश्च [५.४.१५३] इति कबापादितो नद्यन्तबहुव्रीहेरित्यर्थात् । नद्यन्तस्य बहुव्रीहित्वाभावात्तदसंगतिः । नद्यन्तानां यः समास इत्यर्थेन च परिहृतम् । नद्यन्तप्रकृतिकसुन्तोत्तरपदकः समास इतीति चेत् । न । अनया

---

२ B. स्त्रीलिङ्गः श्रमणादिशब्दपाठः C. स्त्रीलिङ्गश्रमणादिपाठः

३ C. न तु कुमार°; B. om. तु.

३ P. तदेतज्ज्ञापकम्; B. C. तज्ज्ञापकम्.

५ B. ञिन्नित्स्वरे C. ञित्स्वरविधौ.

५ P. राज्ञः स्वरे; B. C. राजस्वरे.

७ C. P. °निमित्तकार्ये; B. °निमित्तककार्ये.

१० B. and Bhâseya परिगणिताः C. गणिताः.

१३ C. P. इत्यर्थेन च; B. om. च.

१४ C. इतीति चेत्; B. इति चेत्.

परिभाषया स्त्रीप्रत्ययसमभिव्याहारे तद्रहिते दृष्टानां प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टे ऽपि पर्याप्तत्वमतिदिश्यत इत्याशयात् ॥ ७१ ॥

नन्वेवं यूनः पश्येत्यत्रेव युवतीः पश्येत्यत्रापि श्वयुव [६. ४. १३३] इति संप्रसारणं स्यादत आह ।

5 ## विभक्तौ लिङ्गविशिष्टाग्रहणम् ॥ ७२ ॥

स्पष्टा चेयं युवोरनाकौ [७. १. १] इत्यत्र भाष्ये । घटघटीग्रहणेन लिङ्गविशिष्टपरिभाषाया अनित्यत्वात्तन्मूलैवेत्यन्ये ॥ ७२ ॥

ननु तस्यापत्यम् [४. १. ९२] इत्येकवचननपुंसकाभ्यां निर्देशाद्गार्ग्यौ गार्ग्यावित्याद्ययुक्तमत आह ।

10 ## सूत्रे लिङ्गवचनमतन्त्रम् ॥ ७३ ॥

अर्धं नपुंसकम् [२. २. २] इति नपुंसकग्रहणमस्या ज्ञापकम् । नित्यनपुंसकत्वार्थं तु न तदित्यन्यत्र निरूपितम् ॥ धान्यपलालन्यायेन नान्तरीयकतया तयोरुपादानमिति तस्यापत्यमित्यत्र भाष्ये स्पष्टम् ॥ अत एवाकडारसूत्र एकेति चरितार्थमित्यन्यत्र विस्तरः ॥ ७३ ॥

---

१ B. तद्रहितदृष्टानां.

१ C. प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टे; B. प्रातिपादिकत्वव्याप्यधर्माणां लिङ्गविशिष्टे.

६ C. P. स्पष्टा चेयं; B. इयं स्पष्टा

७ P. °त्तन्मूलैवेत्यन्ये; B. C. °त्तन्मूलैषेत्यन्ये.

८ B. originally °द्गार्ग्यौ गार्ग्या इत्या°, which has been altered to °द्गार्ग्यो गार्ग्या इत्या°.

९ C. °युक्तमत आह; B. °युक्तमित्यत आह.

१२ B. °नपुंसकार्थं; C. नपुंसकत्वार्थं.

१४ C. अत एवा कडार इति सूत्रे.

ननु भृशादिभ्यो भुव्यच्वेः [३. १. १२] इत्यादौ विधीयमानः क्यङ् दिवा भृशा भवन्तीत्यत्रापि स्यादत आह ।

## नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ॥ ७४ ॥

नञ्युक्तमिवयुक्तं च यत्किंचिदृश्यते तत्र तस्माद्भिन्ने तत्सदृशे ऽधिकरणे द्रव्ये कार्यं विज्ञायते हि यतस्तथार्थगतिररित । न ह्यब्राह्मणमानयेत्युक्ते लोष्ठमानीय कृती भवति । अतश्च्व्यन्तभिन्ने च्व्यन्तसदृशे ऽभूततद्भावविषये क्यङिति नोक्तदोषः ॥ ओषधेश्च विभक्तावप्रथमायाम् [६. ३. १३२] इत्यादौ विभक्तिग्रहणाद्येतन्न्यायसिद्धार्थानुवाद एव । एतेन विभक्तावित्याद्यस्यानित्यत्वे ज्ञापकमिति वदन्तः परास्ता अनित्यत्वे भाष्यसंमतफलाभावात् । अत एवाकर्तरि च [३. ३. १९] इति सूत्रे कारकग्रहणं भाष्ये प्रत्याख्यातमिति बोध्यम् ॥ स्पष्टा चेयं भृशादिभ्यः [३. १. १२] इति सूत्रे भाष्ये ॥ अत्रान्यसदृशेत्युक्त्या सादृश्यस्य भेदाघटितत्वं सूचयति । निरूपितं चैतन्मञ्जूषायाम् ॥ ७४ ॥

ननु व्याघ्री कच्छपीत्यादौ सुबन्तेन समासात्ततो ऽप्यन्तरङ्गत्वाट्टाप्यदन्तत्वाभावाज्जातिलक्षणो ङीष् न स्यादत आह ।

## गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः ॥ ७५ ॥

उपपदम् [२ २.१९] इति सूत्रे ऽतिङ्ग्रहणेन कुगति [२.२.१८] इ-

---

१ C. इत्यादौ विधीयमानः; B. इति विधीयमानः.

८ C. °ग्रहणाद्येतन्न्याय°; B. °ग्रहणमेतन्न्याय°.

८ P. एतेन; B. C. तेन.

८ C. विभक्तावित्याद्यस्या°; B. विभक्तावित्यस्या°.

त्वत्र तदपकर्षेणनातिङन्तश्च समास इत्यर्थात्तयोः सूत्रयोः सुपेत्यस्य निवृत्त्यै-
कदेशानुमत्या कारकांशे च सिद्धेयं तेनाश्वक्रीतीति सिद्धा । अन्यथा पूर्वं
टाप्यदन्तत्वाभावात्क्रीतात्करणपूर्वात् [४.१.५०] इति ङीष् न स्यात् ॥ अ-
स्या अनित्यत्वात्क्वचित्सुबुत्पत्त्यनन्तरमपि समासो यथा सा हि तस्य धनक्रीते-
५ ति । अन्ये त्वनित्यत्वे न मानं तत्राजादित्वाट्टाबित्याहुः ॥ अत एव कुम्भका-
र इत्यादौ षष्ठीसमासोऽपि सुबुत्पत्तेः पूर्वमेव । षष्ठीसमासाभावे चोपपद-
समासकृत एकार्थीभाव इति न तत्र वाक्यमित्युपपदम् [२.२.१९] इति
सूत्रे भाष्ये स्पष्टम् । तत्र हि षष्ठीसमासादुपपदसमासो विप्रतिषेधेनेति वार्त्ति-
कम् । अथवा विभाषा षष्ठीसमासो यदा न षष्ठीसमासस्तदोपपदसमास इति
१० तत्प्रत्याख्यानं च । यद्यप्युपपदसमासस्यान्तरङ्गत्वाभिप्रायकं न वा षष्ठीस-
मासाभावादुपपदसमास इति वार्त्तिककृतोक्तं तथापि तदुभयप्रत्याख्यानपरम-
थवेत्यादि भाष्यं परिभाषायां सामान्यतः कारकोपादानेन कारकविभक्त्यन्ते-
न कृद्भिः समासमात्रस्य सुबुत्पत्तेः पूर्वमेव लाभात् ॥ एतेनैषा कारकतद्विशे-
षयोरुपादान एवेति परास्तम् । अस्या विध्येकवाक्यत्वाभावेन विप्रतिषेधादि-
१५ शास्त्रवत्कार्यव्यवस्थापकत्वेनोपादान एवेत्यर्थालाभाच्च ॥ ७५ ॥

---

१ P. सुपेत्यस्य; B. C. सुप्सुपेत्यस्य; P. mentions the latter reading.

२ C. °क्रीतीति सिद्धा; B. om. इति.

३ B. अस्यानित्य°.

६ C. इत्यादौ; B. इत्यत्र.

१० C. °ख्यानं च; B. om. च.

१३ B. समासमात्रेस्य.

१३ C. °तद्विशेषयोरुपादान; B. °तद्विशेषोपादान.

१४ B. विध्येकवाक्यत्वा°.

१५ C. °र्थालाभाच्च; B. °र्थलाभाच्च.

ननूगिदचाम् [७. १. ७०] इत्यत्र धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियमेनाधातोरेव नुमि सिद्धे ऽधातुग्रहणं व्यर्थमत आह ।

## सांप्रतिकाभावे भूतपूर्वगतिः ॥ ७६ ॥

तत्तद्वचनसामर्थ्यन्यायसिद्धेयम् । तत्सामर्थ्याद्धातुभूतपूर्वस्यापीत्यर्थेन गोमत्यतेः क्विपि गोमानित्यादौ नुम्सिद्धिः । नामि [६. ४. ३] इत्यादिसू- ५ त्रेषु भाष्ये स्पष्टा ॥ ७६ ॥

## बहुव्रीहौ तद्गुणसंविज्ञानमपि ॥ ७७ ॥

अपिनातद्गुणसंविज्ञानम् ॥ तेषां गुणानामवयवपदार्थानां संविज्ञानं विशे- ष्यान्वयित्वमिति तदर्थः ॥ यत्र समवायसंबन्धेन संबन्ध्यन्यपदार्थस्तत्र प्रायस्त- द्गुणसंविज्ञानम् । अन्यत्र प्रायो ऽन्यत् ॥ लम्बकर्णचित्रगू उदाहरणे । सर्वा- १० दीनि [१. १. २७] जक्षित्यादयः [६. १. ६] इति चोदाहरणे ॥ सर्वनाम- संज्ञासूत्रे भाष्ये स्पष्टा ॥ ७७ ॥

ननु वदः सुपि क्यप्च [३. १. १०६] इति चेनानुकृष्टस्य यतो भुवो भावे [३. १. १०७] इत्यत्राप्यनुवृत्तिः स्यादत आह ।

## चानुकृष्टं नोत्तरत्र ॥ ७८ ॥ १५

णमुल्यनुवर्तमाने ऽव्यये ऽयथाभिप्रेता [३. ४. ५९] इति सूत्रे पुनर्णमुल्ग्र-

---

२ C. नुम् सिद्धे.

४ C. P. तत्साम°; B. एतत्साम°.

६ C. स्पष्टा; B. स्पष्टम्.

८ B. and Râghavendra विशेष्यान्वयित्व°; P. mentions this reading; C. P. विशेष्यान्वयिनान्वयित्व°.

९ B. समवायसंयोगसंबन्धान्यतरसंबन्धेन.

१० B. °चित्रगु.

१२ C. स्पष्टा; B. स्पष्टैषा.

हणमस्या ज्ञापकम् । अन्यथा चेति वदेत् । तच्चुत्तरत्रोभयोः संबन्धार्थम् । उदाहरणानि स्फुटानि ॥ इदमनित्यम् । अत एव तृतीया च होः [२.३.३] इत्यत्र चानुकृष्टाया अपि द्वितीयाया अन्तरान्तरेण [२.३.४] इत्यत्र संबन्धः ॥ लुटि च क्लृपः [१.३.९३] इति सूत्रस्थेनानुवृत्त्यर्थसकलचकारप्रत्या-
५ ख्यानेन विरुद्धेयम् । व्याख्यानादेवानुवृत्तिनिवृत्त्योर्निर्वाह इति तदाशयः ॥ कुलिजाल्लुकूखौ च [५.१.५५] इति सूत्रस्थभाष्यविरुद्धा च । तत्र हि द्विगोः ष्ठंश्च [५.१.५४] इति सूत्रात् ष्ठनस्तत्र चेनाप्यनुकृष्टस्य खोऽन्यतरस्यामित्यस्य चानुवृत्तिं स्वीकृत्य लुकूखौ चेति भाष्ये प्रत्याख्यातम् ॥ ७८ ॥

नन्वनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नो-
१० तीत्यत आह ।

## स्वरविधौ व्यञ्जनमविद्यमानवत् ॥ ७९ ॥

स्वरोद्देश्यके विधावित्यर्थः ॥ नोत्तरपदे ऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु [६.२.१४२] इति सूत्रे पृथिव्यादिपर्युदासो ऽस्या ज्ञापकः । अन्यथा पृथिव्यादीनामनुदात्तादित्वाभावादप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव ॥ धर्मिग्राहकमानादेव च
१५ स्वरोद्देश्यकविधिविषयमिदम् । अत एव शतुरनुमो नद्यजादी [६.१.१७३] अचः कर्तृयकि [६.१.१९५] इत्यादावजादी अच इत्यादेश्चारितार्थ्य-

---

४ C. ° नुवृत्त्यर्थचकार°.

५ P. तदाशयः; B. C. तदाशयात्.

६ C. °भाष्यविरुद्धाच्च; B. °भाष्यविरोधाच्च.

७ C. चेनाप्यपकृष्टस्य.

७ P. °मित्यस्य चानु°; C. °मित्यनु°; B. °मित्यस्यानु°; P. mentions the last reading.

८ C. om. भाष्ये.

१६ C. इत्यादेश्चारितार्थ्यम्; B. इत्यादीनां चारितार्थ्यम्.

म् । अत एव राजवतीत्यादौ नलोपस्यासिद्धत्वादन्वतीशब्दत्वादन्तोऽवत्याः [६.१.२२०] इति स्वरो नोदश्वित्वानित्यत्र ह्रस्वनुड्भ्याम् [६.१.१७६] इति मतुबुदात्तत्वं नेत्याकरः ॥ स्पष्टं चेदं समासस्य [६.१.२२३] इति सूत्रे भाष्ये ॥ उच्चैरुदात्तः [१.२.२९] इति सूत्रे कैयटस्त्वियमनावश्यकी समभिव्याहृताजुपरागेण हलो ऽप्युदात्तादिवदवभासात्तदुपपत्तेरित्याह । तत्र भाष्ये ऽपि ध्वनितमेतत् ॥ ७९ ॥ ५

नन्वेवमपि राजदृषदित्यादौ समासस्य [६.१.२२३] इत्यन्तोदात्तत्वं षकाराकारस्य न स्यादत आह ।

## हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् ॥ ८० ॥

अस्याश्च यतो ऽनावः [६.१.२१३] इति सूत्रे नौप्रतिषेधो ज्ञापकः । १० नाव्यमित्यत्रादिर्नकारो न स्वरयोग्यो यश्चाकारस्तद्योग्यो नासावादिरिति स प्रतिषेधो ऽनर्थकः ॥ न चादिरेव नकार उदात्तगुणविशिष्टान्तरतमाज्रूपो ऽस्त्विति वाच्यम् । तथा सति निमित्तभूतद्व्यच्कत्वस्य विनाशादुपजीव्यविरोधेनाद्युदात्तत्वाप्राप्तेरित्यन्यत्र विस्तरः ॥ स्पष्टा चेयं समासस्य [६.१.२२३] इति सूत्रे भाष्ये ॥ ८० ॥ १५

ननु पूरणगुण [२.२.११] इति निषेधस्तव्यत्यपि स्यात् । दिव औत् [७.१.८४] इत्यौत्त्वं दिवेः क्विप्यपि स्यात् । तथा यतो ऽनावः [६.१.२१३] इति स्वरो ण्यत्यपि स्यात् । ऋदृशो ऽङि गुणः [७.४.१६] इति चङ्यपि स्यात् । अत आह ।

---

३ B. C. °दात्तत्वं च नेत्याकरः; P. om. च.

४ B. om. भाष्ये.

१० B. नौप्रतिषेधो ऽस्या ज्ञापकः.

१२ B. उदात्तविशिष्टा°.

१३ C. °भूतद्व्यच्कस्य.

१४ P. °दात्तत्वाप्राप्तेरि°; B. C. °दात्तताप्राप्तेरि°.

## निरनुबन्धकग्रहणे न सानुबन्धकस्य ॥ ८१ ॥

## तदनुबन्धकग्रहणे नातदनुबन्धकस्य ॥ ८२ ॥

वामदेवाड्ड्यड्ड्यौ [४. २. ९] इति सूत्रे ड्यड्ड्यतोर्डित्त्वमनयोर्ज्ञापकम् । तद्धि ययतोश्चातदर्थे [६. २. १५६] इत्यत्र तयोरग्रहणार्थम् । नञः परस्य ययदन्तस्योत्तरपदस्यान्त उदात्त इति तदर्थः । एवं चावामदेव्येऽव्ययपूर्वपदप्रकृतिस्वर एव भवति ॥ तन्मात्रानुबन्धकग्रहणे स चान्यश्चानुबन्धो यस्य तद्ग्रहणं नेत्यन्त्यार्थः ॥ एते च प्रत्ययाप्रत्ययसाधारणे दिव औत् [७. १. ८४] इत्यादौ संचारितत्वात् ॥ वर्णग्रहणे चानयोरप्रवृत्तिरिति स्पष्टमौङ आपः [७. १. १८] इत्यत्र भाष्ये ॥ येनानुबन्धेन सानुबन्धकत्वं ह्यनुबन्धकत्वादि वा तदनुच्चारण एवैषा धर्मिग्राहकमानात् । तेन जश्शसोः [७. १. २०] इत्यत्र नैषेति निरनुबन्धकत्वात्तद्धितशस एवात्र ग्रहणं स्यादिति न शङ्क्यम् । एवमन्त्यान्यतरानुबन्धोच्चारण एव । तेन वनो र च [४.१.७] इत्यादौ क्वनिप्कनिपोर्ग्रहणसिद्धिः ॥ एकानुबन्धकग्रहणे संभवतीति त्वर्थो न भाष्यादिसंमत इत्यन्यत्र विस्तरः ॥ ८२ ॥

---

२ B. नातदनुबन्धकस्य ग्रहणम्; C. om. ग्रहणम्.

४ C. इत्यत्र तदयोर°; B. इत्यत्रानयोर°; P. reads तयोः; and mentions the reading अनयोः.

५ P. °पदस्यान्त उदात्त इति; B. °पदस्यान्तोदात्त इति; C. °पदस्यान्तोदात्तमिति.

६ C. तन्मात्रकानुबन्धग्रहणे.

७ B. °त्ययग्रहणसाधारणे दिव औदित्यादौ भाष्ये सं°.

८ C. °वृत्तिरिति स्पष्टमौङ आपः; B. om. स्पष्टम्.

९ B. सानुबन्धत्वं.

१२ C. P. क्वनिप्कनिपो°; B. वनिप्कनिपो°

१३ B. एकानुबन्धग्रहणे संभवतीति तु नार्थो भाष्याद्यसंमतत्वादित्यन्यत्र.

ननु कुटीर इत्यादौ स्वार्थिकत्वात्स्वार्थिकानां प्रकृतितो लिङ्गवचनानुवृत्तेर्न्यायप्राप्तत्वात्पुंस्त्वानुपपत्तिरप्कल्पामित्यत्र नपुंसकत्वैकवचनयोरनुपपत्तिश्चेत्यत आह।

## क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते ॥ ८३ ॥

णचः स्त्रियाम् [५. ४. १४] इति सूत्रे स्त्रियामित्युक्तिरस्या ज्ञापिका। ५ अन्यथा कर्मव्यतिहारे णच् स्त्रियाम् [३. ३. ४३] इति स्त्रियामेव विधानात्किं तेन ॥ स्पष्टा चेयं बहुज्विधायके भाष्ये ॥ ८३ ॥

ननु सुपथी नगरीति युवोरनाकौ [७. १. १] इति सूत्रभाष्योदाहृत इनः स्त्रियाम् [५. ४. १५२] इति कप्स्यादत आह।

## समासान्तविधिरनित्यः ॥ ८४ ॥ १०

प्रतेरंश्वादयस्तत्पुरुषे [६. २.१९३] इत्यन्तोदात्तत्वायांश्वादिषु राजञ्शब्दपाठोऽस्या ज्ञापकः। अन्यथा टचैवान्तोदात्तत्वे सिद्धे किं तेन ॥ द्वित्रिभ्यां पाद्दन्मूर्धसु [६. २. १९७] इति स्वरविधायके भाष्ये स्पष्टेयम् ॥८४॥

ननु शतानीत्यादौ नुमि कृते षट्संज्ञा प्राप्नोति ततश्च लुक् स्यात्तथोपादास्तेत्यत्रात्त्वे कृते स्थाघ्वोरिच्च [१. २. १७] इतीत्त्वं प्राप्नोत्यत आह। १५

## संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥ ८५ ॥

संनिपातो द्वयोः संबन्धस्तन्निमित्तो विधिस्तं संनिपातं यो विहन्ति तस्यानिमित्तम् ॥ उपजीव्यविरोधस्यायुक्तत्वमिति न्यायमूलैषा ॥ अत एवात्र संनिपातशब्देन न पूर्वपरयोः संबन्ध एव किंतु विशेष्यविशेषणसंनिपातोऽपि गृह्यते। अत एव ग्रामणि कुलमित्यादौ नपुंसकह्रस्वत्वेऽपि पिति कृति २

---

२ C. नपुंसकैकवचन°.

६ C. इति स्त्रियामेव; B. इति णचः स्त्रियामेव.

१५ C. प्राप्नोत्यत आह; B. प्राप्नोतीत्यत आह.

[६.१.७१] इति तुग्ग प्रातिपदिकाजन्तत्वसंनिपातेन जातस्य ह्रस्वस्य तद्वि-घातकत्वात् । तुक्यजन्तत्वविघातः स्पष्ट एव ॥ न चार्थाश्रयत्वेन ह्रस्वस्य बहिरङ्गतयासिद्धत्वम् । अर्थकृतबहिरङ्गत्वानाश्रयणस्योक्तत्वात् । किंच षत्व-तुकोरसिद्धः [६. १. ८६] इत्येतद्बलात्कृति तुग्ग्रहणाच्च तुग्विधौ बहिरङ्गप-
५ रिभाषाया अप्रवृत्तेः ॥ सर्वविधसंनिपातग्रहणादेव वर्णाश्रयः प्रत्ययो वर्णविचा-लस्यानिमित्तं स्यादित्येतत्परिभाषादोषनिरूपणावसरे वार्त्तिककृतोक्तम् । न हि प्रत्ययः पूर्वपरसंनिपातनिमित्तकः स एव च संनिपातशब्देन गृह्यत इति मत्वा न प्रत्ययः संनिपातनिमित्तक इति शङ्कायां तदभ्युपेत्यैवाङ्गसंज्ञा तद्वि-निमित्तं स्यादित्येकदेशिनोक्तमिति न तद्भाष्यविरोधः । किंचैवं शैवो गार्ग्यो
१० वैनतेय इत्यादावप्यङ्गसंज्ञाया लोपनिमित्तत्वानापत्त्या वर्णाश्रय इत्यस्य वैय-र्थ्यम् ॥ ग्रामणिकुलं ग्रामणिपुत्र इत्यादावुत्तरपदनिमित्तके ह्रस्वत्वे यथाकथं-चिद्बहिरङ्गपरिभाषयापि वारणं संभवतीति कृन्मेजन्तः [१. १. ३९] इत्यत्र ह्रस्वस्य पिति [६. १. ७१] इति सूत्रे चैकदेशिना तया परिभाषया तुग्वा-रितो भाष्ये । अत एव परिभाषाफलत्वेनेदमुक्तं कृन्मेजन्त इति सूत्रे वार्त्तिक-
१५ कृतेति केचित् ॥ संनिपातलक्षणविधित्वमस्या लिङ्गम् ॥ स्वप्रवृत्तेः प्राक् स्वनि-

---

१ B. C. P. प्रातिपदिकाजन्तत्व०; P. says that some read प्रातिपदिकाजन्तसंनिपातेन.

५ B. वर्णविघातस्या°.

७ B. P. स एव च; C. स एव; P. mentions the latter reading.

१२ C. ०परिभाषया वारणं.

१२ B. P. इत्यत्र; C. om. इत्यत्र.

१४ C. reads here and in the following कृन्मेजन्तसूत्रे.

१५ B, P स्वप्रवृत्तेः; C. स्वप्रकृतेः.

मित्तभूतो यः संनिपातस्तद्विघातकस्य स्वातिरिक्तशास्त्रस्य स्वयमनिमित्तमिति फलति ॥

नन्वेवं रामायेत्यादौ सुपि च [७.३.१०२] इति दीर्घानापत्तिः । अदन्ताङ्ङेसंनिपातेन जातस्य यादेशस्य तदविघातकत्वात् ॥ न च यञादित्वसापेक्षदीर्घस्य बहिरङ्गतयासिद्धत्वान्नात्र संनिपातविघात इति वाच्यम् । आरोपितासिद्धत्वे ऽपि वस्तुतस्तद्विघातस्य जायमानत्वेनैतत्प्रवृत्तेः । किंचान्तरङ्गे कर्तव्ये बहिरङ्गस्यासिद्धत्वे ऽपि तत्र कृते तस्यासिद्धत्वे मानाभावः । किंचातिदेशिकसंनिपातविघाताभावमादायैतदप्रवृत्तौ गौरित्यादौ संबुद्धिलोपे ऽपि स्थानिवत्त्वेन ह्रस्वनिमित्तसंनिपातविघाताभावात्तत्रैतस्यातिव्याप्तिपरकृन्मेजन्तः [१.१.३९] इतिसूत्रस्थभाष्यासंगतिः । संनिपातस्याशास्त्रीयत्वान्नात्र स्थानिवत्त्वमिति चेत्तर्हि त्रासिद्धत्वमपि कथमिति विभावयाशास्त्रीये ऽसिद्धत्वाप्रवृत्तेरीदूदेत् [१.१.११] इति सूत्रे कैयटेन स्पष्टमुक्तत्वात् । एवं च पूर्वत्रासिद्धीये ऽपि कार्य एतत्परिभाषाप्रवृत्तिर्भवत्येवेति चेत् । न । कष्टाय [३.१.१४] इति निर्देशेनैतस्या अनित्यत्वात् ॥

ययोः संनिपातस्य विघातकं शास्त्रं तयोः संनिपातनिमित्तकविधावुपा-

---

१ C. °द्विघातकस्य; B. °द्विघातस्य.

५ C. °सापेक्षदीर्घस्य; B. °सापेक्षस्य दीर्घस्य.

६ P. °त्वेनैतत्प्रवृत्तेः; B. C. °त्वेन तत्प्रवृत्तेः.

११ P. चेत्तर्हि त्रा°; B. C. चेत्तत्रा°; P. mentions the latter reading and says that some read also in the preceding °शास्त्रीयत्वान्न तत्र.

१४ P. निर्देशेनैतस्या; B. निर्देशेन तस्या; C. निर्देशेनास्या; P. mentions the last reading.

१५ B. C. P. ययोः—°वुपादान°; P. mentions the reading ययोः संनिपातः कार्यस्य निमित्तं तयोः सूत्र उपादान°.

दानमपेक्षितमिति तु नाग्रहः । अत एव दाक्षिरित्यत्राकारान्तप्रकृतीञ्संनिपातानिमित्ताङ्गसंज्ञानया परिभाषयाल्लोपस्य निमित्तं न स्यादित्याशङ्क्यानित्यत्वेन समाहितं कृन्मेजन्तः [१.१.३९] इति सूत्रे भाष्ये । न ह्यङ्गसंज्ञायामदन्तस्याङ्गसंज्ञेत्युक्तमस्ति ॥ न च कुम्भकारेभ्य आधय इत्यादावव्ययसंज्ञाया अन-
५ या परिभाषया वारणपरभाष्यासंगतिः । अनया परिभाषया लुग्मा भूत् । अव्ययत्वं तु स्यादेव । लुका हि तदीयसंनिपातस्य विघातो नाव्ययसंज्ञया । संज्ञाफलं त्वकच्स्यादिति वाच्यम् । एतदुदाहरणपरभाष्यप्रामाण्येन साक्षात्परंपरया वा स्वनिमित्तसंनिपातविघातकस्य स्वयमनिमित्तमित्यर्थेनादोषात् । एतेनाव्ययकच्स्यादित्यपास्तम् ॥ न च कार्यकालपक्षे लुगेकवाक्यतापन्नसंज्ञाबा-
१० धे ऽप्यकजेकवाक्यतापन्ना स्यादिति वाच्यम् । अन्तरङ्गायां तदेकवाक्यतापन्नसंज्ञायां बहिरङ्गगुणादेरसिद्धत्वात् । लुगेकवाक्यतापन्ना तु न गुणादितो ऽन्तरङ्गोभयोरपि शब्दतः सुबाश्रयत्वात् ॥

न यासयोः [७.३.४५] इति निर्देशाच्चैषानित्या तेन नातिप्रसङ्गः ॥ स्पष्टा चेयं कृन्मेजन्तः [१.१.३९] इति सूत्रे भाष्ये ॥ अस्या अनित्यत्वे फ-
१५ लानि भाष्ये परिगणितानि । वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तम् । दाक्षिः ॥ आत्त्वं पुग्विधेः । क्रापयति ॥ पुग् ह्रस्वत्वस्य । अदीदपत् ॥ त्यदा-

---

१ C. °प्रकृतिक इञ्सं°.

४ P. अनया; B. C. तया.

८ B. स्वनिमित्तविघातकस्य; C. स्वनिमित्तसंनिपातविघातस्य.

८ P. °मित्यर्थेना°; B. C. °मिति तदर्थेना°; P. mentions the reading एतदर्थेन.

१२ P. ऽन्तरङ्गोभ° B. C. बहिरङ्गोभ°.

१३ C. न यासयोरित्यादिज्ञापकाच्चैषानित्या.

१४ C. फलानि परिगणितानि.

द्यकारष्टाब्विधेः । या सेति ॥ इड्विधिराकारलोपस्य । पपिवान् ॥ ह्रस्वनुड्भ्यां मतुप् [६.१.१७६] अन्तोदात्तादुत्तरपदात् [६.१.१६९] इति मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य । अग्निमान् । परमवाचा ॥ नदीह्रस्वत्वं संबुद्धिलोपस्य । नदि कुमारीत्यादि ॥ यादेशो दीर्घत्वस्य । कष्टाय ॥ इतो ऽन्यत्र प्रवृत्तिरेव दोषाः खल्वपि साकल्येन परिगणिता इति भाष्योक्तेरित्यन्यत्र विस्तरः ॥ ८५ ॥ ५

ननु पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यादौ द्विगोर्लुक् [४.१.८८] इत्यणो लुकि लुक्तद्धित [१.२.४९] इति स्त्रीप्रत्ययलुक्यानुकः श्रवणापत्तिरत आह ।

## संनियोगशिष्टानामन्यतरापाय उभयोरप्यपायः ॥ ८६ ॥ १०

अत्र च बिल्वकादिभ्यश्छस्य लुक् [६. ४. १५३] इति सूत्रस्थं छग्रहणं ज्ञापकम् । तद्धि छमात्रस्य लुग्बोधनद्वारा कुको ऽनिवृत्तिर्यथा स्यादित्यर्थम् । कृतकुगागमा नडाद्यन्तर्गणबिल्वादय एव तत्र निर्दिष्टा बिल्वकादिशब्देन ॥ न चैवमपि छग्रहणं व्यर्थं कृतकुगागमानुवादसामर्थ्यादेव तदनिवृत्तिसिद्धेः । अन्यथा बिल्वादिभ्य इत्येव वदेत् । लक्षणप्रतिपदोक्तपरिभाषया बिल्वादिपुरस्कारेण विहितप्रत्ययस्यैव लुग्विधानान्नातिप्रसंङ्ग इति वाच्यम् । ततो ऽपि प्रतिपदोक्तत्वेन बिल्वादिभ्यो ऽण् [४.३.१३६] इति विकाराद्यर्थस्य लुगापत्तिवारणार्थं कुगनुवादचारिताथ्यात् ॥ समुच्चयार्थकचशब्द- १५

---

४ P. यादेशो दीर्घत्वस्य । कष्टाय; B. C. यादेशः सुपि चेति दीर्घत्वस्य.

५ B. and Bhâshya परिगणिताः; C. गणिताः.

१२ C. छमात्रस्य लु°; B. छमात्रलु°.

१२ C. P. स्यादित्यर्थम्; B. स्यादित्यर्थे.

१३ C. °बिल्वादयः; B. °बिल्वकादयः.

१७ P. विकाराद्यर्थस्य; B. C. विकारार्थस्य.

पक्षे तु विधेययोरेककालिकत्वैकदेशत्वनियमान्न्यायसिद्धापीयम् ॥ यत्तु णाविष्ठवदित्यनेन पुंवत्त्वविधानमेतदनित्यत्वज्ञापनार्थमन्यथैतयतीत्यादौ टिलोपेनैव ङीपि निवृत्ते संनियोगशिष्टपरिभाषया नस्यापि निवृत्त्यैतयतीत्यादिसिद्धौ पुंवत्त्ववैयर्थ्यं स्पष्टमेवेति टेः [६.४.१५५] इति सूत्रे कैयटरत्नम् । इडविड-
५ माचष्ट ऐडविडयतीत्यादौ पुंवत्त्वस्यावश्यकत्वात् ॥ ऐनेयः श्यैनेय इत्यादि तु स्थानिवत्त्वेन सिद्धमित्यन्यत्र विस्तरः ॥ ८६ ॥

ननु चुरा शीलमस्याः सा चौरीत्यादौ शीलम् [४.४.६१] छत्रादिभ्यो णः [४.४.६२] इति णे ङीम्न प्राप्नोतीत्यत आह ।

## ताच्छीलिके णे ऽण्कृतानि भवन्ति ॥ ८७ ॥

१० अन् [६.४.१६७] इत्यणि विहितप्रकृतिभावबाधनार्थं कार्मस्ताच्छील्ये [६.४.१७२] इति निपातनमस्या ज्ञापकम् ॥ ताच्छीलिकणान्तादणो द्व्यचः [४.१.१५६] इति फिञ्सिद्धिरप्यस्याः प्रयोजनमिति नव्याः ॥ ताच्छीलिक इत्युक्तेस्तदस्यां प्रहरणम् [४.२.५७] इति णे दाण्डेत्येव ॥ कार्मः [६.४.१७२] इति सूत्रे भाष्ये स्पष्टा ॥ ८७ ॥

१५ ननु कंसपरिमृड्भ्यामित्यादौ मृजेर्वृद्धिर्दुर्वारेत्यत आह ।

## धातोः कार्यमुच्यमानं तत्प्रत्यये भवति ॥ ८८ ॥

भ्रौणहत्ये तत्वनिपातनमस्या ज्ञापकम् ॥ धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमिति पाठस्तु प्रसृड्भिरित्यादावनुदात्तस्य चर्दुपधस्य [६.१.५९]

---

१ B. P. °सिद्धापीयम्; C. °सिद्धा चेयम्; P. mentions the latter reading.

५ B. श्येनेयः.

१४ C. स्पष्टा; B. स्पष्टैषा.

१६ C. तत्प्रत्यय एव भवति.

१७ C. °निपातनमस्या ज्ञा°; B. °निपातनं चास्या ज्ञा°.

इत्यमापादनेन भाष्ये दूषितः ॥ यत्कार्यं प्रत्ययनिमित्तकं तत्रैवं व्यवस्थापिका । तेन पदान्तत्वनिबन्धनं नशेर्वा [८.२.६३] इति कुत्वं प्रनड्भ्यामित्यादौ भवत्येव ॥ इयङादिविधौ तु नैषा न भूसुधियोः [६. ४. ८५] इति निषेधेनानित्यत्वात् ॥ मृजेर्वृद्धिः [ ७. २.११४ ] इत्यत्र भाष्ये स्पष्टा ॥ ८८॥

ननु सर्वक उच्चकैरित्यादौ सर्वनामाव्ययसंज्ञे न स्यातामत आह । ५

तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ॥ ८९ ॥

नेदमदसोरकोः [ ७. १. ११ ] इति सूत्रे ऽकोरिति निषेधो ऽस्या ज्ञापकः ॥ तदेकदेशभूतं तद्ग्रहणेन गृह्यत इति येन विधिः [ १. १. ७२ ] इति सूत्रे भाष्ये पाठः ॥ ८९ ॥

ननु गातिस्थाघुपाभूभ्यः [ २. ४. ७७ ] इति सिचो लुगपासीदित्यादौ १० पातेरपि स्यादत आह ।

लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ॥ ९० ॥

अस्याश्च ज्ञापकः स्वरतिसूति [ ७. २. ४४ ] इति सूत्रे सूङिति वक्तव्ये

---

१ C. इत्यमापादनेन; B. इत्यमागमापादनेन.

२ B. प्रनड्भ्यामित्यादौ; C. प्रणग्भ्यामित्यादौ; P. प्रणड्भ्यामि०.

३ C. om. तु.

४ C. स्पष्टा; B. स्पष्टैषा.

६ C. तन्मध्यपतित°; B. तन्मध्ये पातित°.

७ C. om. सूत्रे ऽकोरिति.

९ C. सूत्रे भाष्ये पाठः; B. om. भाष्ये.

१२ P. says that some read अलुग्विकरणस्यैव.

१३ C. अस्याश्च ज्ञापकं; B. om. च; P. ज्ञापकः.

१३ C. सूङिति; B. सूङ इति.

सुतिसूयत्योः पृथङ्निर्देश इति कैयटः। तन्न। साहचर्यादलुग्विकरणस्यैव ग्रहणे प्राप्ते पृथङ्निर्देशस्य तज्ज्ञापकत्वासंभवात् ॥ ध्वनिता चेयं परिभाषा यस्य विभाषा [ ७. २. १५ ] इत्यत्र भाष्ये। तत्र हि विदित इति प्रयोगे निषेधमाशङ्क्य यदुपाधेर्विभाषा तदुपाधेर्निषेधो विभाषा गमहनविदविशाम् [ ७.२. ६८ ] इति सूत्रे शब्विकरणस्य ग्रहणं लुग्विकरणस्यायामित्युक्तम्। तत्र चो हेतौ। यतो ऽयं लुग्विकरणो ऽतो विशिसाहचर्याच्छब्विकरणस्य ग्रहणं न तु हनिसाहचर्यादस्याप्येतत्परिभाषाविरोधादिति तदाशयः ॥ अत एव परिभाषायां लुग्विकरणस्यैवेति नोक्तम् ॥ कण्ठतस्तु भाष्य एषा क्वापि न पठिता ॥ गातिस्था [ २. ४. ७७ ] इति सूत्रे पिबतेर्ग्रहणं कर्तव्यमिति वार्त्तिककृता सर्वत्रैव पाग्रहणे ऽलुग्विकरणस्य ग्रहणमिति भाष्यकृता चोक्तम् ॥ स्वरतिसूति [ ७. २. ४४ ] इति सूत्रे कैयटेन च स्पष्टमुक्ता ॥ ९० ॥

ननु प्रजिघाययिषतीत्यादौ हेरचङि [ ७. ३. ५६ ] इति विधीयमानं कुत्वं न स्यादत आह।

## प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम् ॥ ९१ ॥

अचङीति प्रतिषेध एवास्या ज्ञापकः ॥ इयं च कुत्वविषयैव। हेरचङीति सूत्रे भाष्ये स्पष्टेयम् ॥ ९१ ॥

ननु युष्मभ्यमित्यादौ भ्यसः [ ७. १. ३० ] इत्यत्र भ्यमिति च्छेदे भ्यसो भ्यमि कृते ऽन्त्यलोप एत्त्वं स्यादत आह।

## अङ्गवृत्ते पुनर्वृत्तावविधिः ॥ ९२ ॥

अङ्गे ऽङ्गाधिकारे वृत्तं निष्पन्नं यत्कार्यं तस्मिन्सति पुनरन्यस्याङ्गका-

१ C. om. इति कैयटः—°संभवात्.

६ C. °करणस्य ग्रहणं; B. °करणस्यैव ग्रहणं.

८ B.P. भाष्य एषा; C. om. एषा.

१५ C. प्रतिषेध; B. निषेध.

र्यस्य वृत्तौ प्रवृत्तावविधानं भवतीत्यर्थः ॥ एषा च ज्यादादीयसः [ ६. ४. १६०] इत्यादिविधानेन ज्ञापिता । अन्यथेकारलोपेनाकत्सार्वे [ ७. ४. २५ ] इति दीर्घेण च सिद्धे तद्वैयर्थ्यं स्पष्टमेव । अत एव भिन्नस्थानिकाङ्गकार्यविषयाप्येषा ॥ इयं चानित्या द्व्योः [ १. २. ५९; ५. ३. ९२ ] इति निर्देशात् । अनित्यत्वबललभ्यार्थमादायैव भ्यसोभ्यम् [ ७. १. ३० ] इति सूत्रे भाष्ये निष्ठितस्येति पठितम् ॥ केचित्त्वनया परिभाषया न किंचिल्लक्ष्यं साध्यते । अत एव ज्ञाजनोर्जा [ ७. ३. ७९ ] ज्यादादीयसः [ ६. ४. १६० ] इति सूत्रयोरेनां ज्ञापयित्वा किं प्रयोजनमिति प्रश्ने पिबतेर्गुणप्रतिषेध उक्तः स न वक्तव्य इत्येव प्रयोजनमुक्तं न तु लक्ष्यसिद्धिरूपम् । तदुक्तम् । भ्यसोभ्यमित्यत्राभ्यमिति च्छेदः शेषे लोपश्चान्त्यलोप एवातो गुणे [ ६. १. ९७ ] इति पररूपेण सिद्धं युष्मभ्यमित्यन्यत्र निरूपितम् । एवं च सूत्रद्वयस्थमेतज्ज्ञापनपरं भाष्यं भ्यसो ऽभ्यमिति सूत्रस्थं च भाष्यमेकदेश्युक्तिरित्याहुः ॥ ९२ ॥

यत्त्वोरोदिति वाच्य ओर्गुणः [ ६. ४. १४६ ] इति गुणग्रहणात्

## संज्ञापूर्वकविधेरनित्यत्वम् ॥ ९३.१ ॥

इयं च विधेयकोटौ संज्ञापूर्वकत्व एव । तेन स्वायंभुवमित्यादि सिद्धम् ॥ १५

तथा णि लोडित्येव सिद्धे आनिग्रहणात्

## आगमशास्त्रमनित्यम् ॥ ९३.२ ॥

तेन सागरं तर्तुकामस्येत्यादि सिद्धम् ॥

तथा तनादिपाठादेव सिद्धे तनादिकृञ्भ्यः [ ३. १. ७९ ] इति सूत्रे कृञ्ग्रहणात् २०

---

१० C. °भ्यमिति च्छेदः; B. °भ्यमित्येव च्छेदः

१२ B. P. सूत्रस्थं च भाष्य°; C. om. च.

१५ P. स्वायंभुवमित्यादि; B. C. स्वायंभुवामिति.

१८ B. सागरं तर्तु°; C. om. सागरं.

१८ B. °मस्येति सिद्धम्.

गणकार्यमनित्यम् ॥ ९३.३ ॥

तेन न विश्वसेदविश्वस्त इत्यादि सिद्धम् ॥

तथा चक्षिङो ङित्करणात्

अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् ॥ ९३.४ ॥

५ तेन स्फायन्निर्मोक इत्यादि सिद्धम् ॥

तथा विनार्थनञा समासेनानुदात्तं पदमनेकमित्येव सिद्धे वर्जग्रहणात्

नञ्घटितमनित्यम् ॥ ९३.५ ॥

तेन नेयङुवङ् [१. ४. ४] इत्यस्यानित्यत्वाद्धे सुभ्रु इति सिद्धमिति तन्न भाष्ये ऽदर्शनात् । भाष्यानुक्तज्ञापितार्थस्य साधुताया नियामकत्वे १० मानाभावात् । भाष्याविचारितप्रयोजनानां सौत्राक्षराणां पारायणादावदृष्टमात्रार्थकत्वकल्पनाया एवौचित्यात् ॥ किंच ज्ञापिते ऽप्यानीत्यस्य न सार्थक्यमाडागमशून्यप्रयोगस्याप्रसिद्धेः । आड्ग्रहणं तु लोड्ग्रहणवदिति बोध्यम् । अत एव घोर्लोपो लेटि वा [७. ३. ७०] इति सूत्रे वेति प्रत्याख्यातम् । लोपे ऽप्याट्पक्ष आटः श्रवणं भविष्यति दधादिति । अटि दधदिति । १५ आगमशास्त्रस्यानित्यत्वे त्वाटचसति दधादित्यसिद्ध्या वाग्रहणस्यावश्यकत्वेन तत्प्रत्याख्यानासंगतिः स्पष्टैव । एतेन यत्कैयटे केचिदित्यादिनास्यैव वाग्र-

---

२ P. इत्यादि; B. C. इति.

३ C. om. तथा.

५ C. °मोकसंधीत्यादि.

९ C. साधुताया नियामकत्वे; B. साधुतानियामकत्वे.

१२ C. °प्रयोगस्याप्रसिद्धेः; B. °प्रयोगाप्रसिद्धेः.

१२ आड्ग्रहणं; P. says that some read आग्रहणं.

१४ C. अटि दधदिति; B. om. अटि

हणस्य तदनित्यत्वज्ञापकतोक्ता सापि चिन्त्या प्रत्याख्यानपरभाष्यविरोधात् ॥ तनादिसूत्रे कृञ्ग्रहणस्य भाष्ये प्रत्याख्यानाच्च ॥ चक्षिङो ङकारस्यान्त इदित्त्वाभावसंपादनेन चारितार्थ्याच्च ॥

एवमेव

## आतिदेशिकमनित्यम् ॥ ९३.६ ॥ ५

## सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् ॥९३.७.८॥

इत्यादि भाष्यानुक्तं बोध्यम् ॥

स्वायंभुवमित्यादि लोके ऽसाध्वेवेत्यन्यत्र विस्तरः ।

यदपि ननु हन्तेर्यङ्लुक्याशीर्लिङि वधादेशो न स्यादत आह ।

## प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ॥ ९३.९ ॥ १०

षाष्टद्वित्वस्य द्विष्प्रयोगत्वसिद्धान्तेन प्रयोगद्वयरूपे समुदाये प्रकृतिरूपत्वबोधनेनेदं न्यायसिद्धम् । अत एव जुहुधीत्यादौ द्वित्वे कृते धित्वसिद्धिरिति तदपि न भाष्ये ऽदर्शनात् । किंच तेन सिद्धान्तेन प्रत्येकं द्वयोस्तत्त्वबोधने ऽपि समुदायस्य तत्त्वबोधने मानाभावः ॥ अत एव दयतेर्दिगि [ ७. ४. ९ ] इति सूत्रे ऽस्तेः परत्वाद्वित्वे कृते परस्यास्तेर्भूभावे कृते पूर्वस्य श्रवणं प्राप्नो- १५

---

१ C. °ज्ञापनतोक्ता.

२ B. °स्यान्तेदित्त्वाभाव°; C. °स्यान्ते इदिदित्वाभाव° B. reads the words चक्षिङो—चारितार्थ्याच्च before तनादिसूत्रे.

६ B. om. इड्विधिः.

९ B. यदपि ननु; C. om. ननु.

१० B. C. यङ्लुङन्तस्यापि.

१० C. ग्रहणमिति । षाष्ठ°.

१२ C. °सिद्धिरिति; B. om. इति.

तीत्याशङ्क्य विषयसप्तम्याश्रयणेन परिहृतं भाष्ये । अन्यथा त्वदुक्तरीत्यैका-
ज्द्विर्वचनन्यायेन समुदायस्यैवादेशापत्तौ तदसंगतिः स्पष्टैव । तस्मादुत्तर-
खण्डमादायैव यथायोगं तत्तत्कार्यप्रवृत्तिर्बोध्या ॥ भूसुवोः [ ७. ३. ८८ ]
इत्यस्य तदन्वाङ्गस्येत्यर्थात्प्राप्तस्य गुणनिषेधस्य बोभूत्विति नियम इति न
५ तद्विरोधः ॥ तस्माद्धन्तेर्यङ्लुकि वध्यादित्यादि माधवाद्युदाहृतं चिन्त्यमेवेत्य-
न्यत्र विस्तरः ॥

यदपि ननु वृद्धिर्यस्याचामादिः [ १. १. ७३ ] इत्यत्रैक्परिभाषोपस्थितौ शालीयाद्यसिद्धिरत आह ।

## विधौ परिभाषोपतिष्ठते नानुवादे ॥ ९३.१० ॥

१० अनूद्यमानविशेषणेषु तन्नियामकपरिभाषा नोपतिष्ठत इति तदर्थः ॥ वि-
ध्यङ्गभूतानां परिभाषाणां विधेयेनासिद्धतया संबन्धासंभवे ऽपि तद्विशेषणे
व्यवस्थापकत्वेन चरितार्थानां तद्विशेषणव्यवस्थापकत्वे मानाभाव इति तर्क-
मूलेयम् ॥ किंचोदीचामातः स्थाने [ ७. ३. ४६ ] इति सूत्रे स्थानेग्रहण-
मस्या लिङ्गम् । अन्यथा षष्ठी स्थाने [ १. १. ४९ ] इति परिभाषयैव त-
१५ ल्लाभे तद्वैयर्थ्यं स्पष्टमेवेति । तन्न । उदात्तस्वरितयोर्यणः [ ८. २. ४ ] इत्यादौ
व्यङः संप्रसारणम् [ ६. १. १३ ] इति सूत्रभाष्योक्तरीत्याल्लोपो ऽनः [ ६.
४. १३४ ] इत्यादौ चैतस्या व्यभिचारितत्वात् । भाष्यानुक्तत्वाच्च । स्थान-

---

१ B. °रीत्येका°.

३ B. °प्रवृत्तिर्बोध्या.

४ B. P. °त्यर्थात्प्रा°; C. °त्यर्थादपि प्रा°; P. rejects the latter reading.

४ C. प्राप्तस्य गुणनिषेधस्य; B. प्राप्तगु°; P. says that some read प्राप्तस्यागुणस्य.

१७ P. चैतस्याः; B. C. च तस्याः.

संबन्धो न परिभाषालभ्य इत्यर्थस्य षष्ठी स्थाने [१. १. ४९] इति सू-
त्रे भाष्ये स्पष्टमुक्तत्वेन त्वदुक्तज्ञापकासंभवाच्च। तत्र स्थानेग्रहणं तु स्पष्टा-
र्थमेव ॥ किंच विधौ परिभाषेति प्रवाद इको गुणवृद्धी [१. १. ३] अचश्च
[१. २. २८] इत्यनयोर्विधीयत इत्यध्याहारमूलको ऽन्यत्र तु नास्याः फल-
मित्यन्यत्र विस्तरः ॥ ९३ ॥ ५

ननु नमस्करोति देवान्नमस्यति देवानित्यादौ नमःस्वस्ति [२. ३. १६]
इति चतुर्थी दुर्वारेत्यत आह।

## उपपदविभक्तेः कारकविभक्तिर्बलीयसी ॥ ९४ ॥

कारकविभक्तित्वं च क्रियाजनकार्थकविभक्तित्वं तच्च प्रथमाया अप्यस्ती-
ति सापि कारकविभक्तिरिति सहयुक्ते [२. ३. १९] इत्यादिसूत्रेषु भाष्ये १०
ध्वनितम् ॥ इयं च वाचनिक्येव। अत एव यस्य च भावेन [२. ३. ३७]
इति सप्तम्यपेक्षयाधिकरणसप्तम्या बलवत्त्वमनेन न्यायेन तत्र च दीयते [५.-
१. ९६] इति सूत्रे भाष्ये ध्वनितं कैयटेन स्पष्टमुक्तम्। एतेन क्रियान्वयित्वं
कारकत्वमित्यपास्तं यस्य च भावेनेति सप्तम्या अपि क्रियान्वयित्वात् ॥ ये
तु प्रधानीभूतक्रियासंबन्धनिमित्तकार्यत्वेन कारकविभक्तीनां बलवत्त्वं वदन्ति १५
तेषामुभयोरपि क्रियासंबन्धनिमित्तकत्वेन तदसंगतिः स्पष्टैव नमोवरिवः [३.
१. १९] इति सूत्रे नमस्यति देवानित्यादौ चतुर्थीवारणाय भाष्य उपन्यास-

---

१ C. om. सूत्रे.

२ B. स्थानग्रहणं.

९ C. क्रियाजनकार्थविभक्तित्वं तत्वं प्रथमायाः.

१४ C. P. ये तु; B. यत्तु.

१५ B. °क्रियानिमित्तकार्यत्वेन.

१६ C. क्रियानिमित्तसंबन्धकत्वेन.

१७ P. उपन्यासस्यासंगतिश्च; C. B. °संगतेश्च.

स्यासंगतिश्च ॥ एतेन क्रियाकारकसंबन्धो ऽन्तरङ्ग इति तन्निमित्ता विभक्ति-रन्तरङ्गोपपदार्थेन तु यत्किंचित्क्रियाकारकभावमूलकः संबन्ध इति तन्नि-मित्ता बहिरङ्गेत्यपास्तं नमस्यतीत्यत्र नमःपदार्थे ऽपि क्रियाकारकभावेनैवा-न्वयात् । अत्र च नमःपदार्थस्यापि क्रियात्वं मुण्डयतौ मुण्डस्येव ॥ सहयु-क्ते [२.३.१९] इत्यादौ च प्रधाने प्रथमासाधनार्थमियं भाष्य उपन्यस्ते-त्यन्यत्र विस्तरः ॥ ९४ ॥

नन्वदमुयङ्ङित्यादौ पूर्वस्यापि मुत्वापत्तिरत आह ।

## अनन्त्यविकारे ऽन्त्यसदेशस्य ॥ ९५ ॥

अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्प्राप्तावन्त्यसदेशस्यैवेति तदर्थः । १० अन्यथा धात्वादेर्नत्वसत्वे नेता सोतेत्यादावेव स्यातां न तु नमति सिञ्चती-त्यादौ ॥ अनन्त्यविकार इति च लिङ्गम् ॥ अन्त्येन समानो देशो यस्य सो ऽन्त्यसदेशः । तत्त्वं चान्त्यवर्णतद्वर्णयोरितराव्यवधानेन बोध्यम् । अत एव विद्ध इत्याद्यर्थं न संप्रसारणे [६. १. ३७] इति चरितार्थम् ॥ अल्लोपो ऽनः [६.४.१३४] इत्यादेरनस्तक्ष्णेत्यादावाद्याकारादावप्रवृत्तिरप्यस्याः फलं १५ यजादिस्वादिपरानन्ताङ्गस्याकारस्य लोप इत्यर्थस्यैवाङ्गांशे प्रत्ययस्यो-स्थिताकाङ्क्षत्वयौचित्यादङ्गावयवयजादिस्वादिपरस्यान इत्यादिक्रमेणानेकत्वाने-कक्लिष्टकल्पनापेक्षयास्या उचितत्वात् ॥ न चैषा ष्यङः संप्रसारणम् [६.१.१३] इति सूत्रे भाष्ये प्रत्याख्यातेति भ्रमितव्यम् । वार्त्तिकोक्तफलानामने-

३ C. P. नमस्यतीत्यत्र; B. नमःस्वस्तीत्यत्र.

४ C. °पदार्थस्य क्रियात्वं.

४ C. मुण्डयतौ; B. मुण्डयतो.

१४ C. P. °नस्तक्ष्णेत्यादावा°; B. °नस्तक्ष्ण इत्यादाव।

१६ B. °काङ्क्षत्वयौचित्यात्.

१६ P. °यजादिस्वादिपरस्यानः; B. C. °यजादिपरस्यानः.

कक्लिष्टकल्पनाभिरन्यथा सिद्धिं प्रदर्श्यापि यान्येतस्याः परिभाषायाः प्रयोज-
नानि तदर्थमेषा कर्तव्या प्रतिविधेयं दोषेषु प्रतिविधानं चोदात्तनिर्देशात्सि-
द्धमित्युपसंहारात् ॥ मिमार्जिषतीत्यर्थं च । तत्र वृद्धेः पूर्वमन्तरङ्गत्वाद्द्वित्वे प-
रत्वादभ्यासकार्ये ततो ऽभ्यासेकारस्य वृद्धिवारणायावश्यकी । न च वृद्धौ पुनर-
भ्यासह्रस्वत्वेन सिद्धिर्लक्ष्ये लक्षणस्येति न्यायेन पुनरप्रवृत्तेः ॥ यत्तु न सं- ५
प्रसारण इति सूत्रे भाष्ये नैतस्याः परिषाभायाः प्रयोजनानीत्युक्तं तस्यायम-
र्थः । एतत्सूत्रप्रयोजनान्येतस्याः परिभाषायाः प्रयोजनानि न भवन्ति व्यधा-
दावन्त्यसमानदेशयणो ऽभावादिति । नैतान्येतस्याः प्रयोजनानीति पाठो
ऽपि क्वचिद्दृश्यते ॥ वाचनिक्येवैषा । स्पष्टा च ष्यङः [६.१.१३] इति
सूत्रे ऽदसो ऽसेः [८.२.८०] इति सूत्रे च केचिदन्त्यसदेशस्येत्यनेन भा- १०
ष्य इत्यन्यत्र विस्तरः ॥ ९५ ॥

नन्वव्यक्तानुकरणस्यातः [६.१.९८] इति पररूपं पटत् इति पटिती-
त्यादावलो ऽन्त्यस्य [१.१.५२] इत्यन्त्यस्य प्राप्नोतीत्यत आह ।

## नानर्थके ऽलो ऽन्त्यविधिरनभ्यासविकारे ॥ ९६ ॥

अनभ्यासेत्युक्तेर्बिभर्तीत्यादौ भृञामित् [७.४.७६] इत्याद्यन्त्यस्यैव । १५
अभ्यासो ऽनर्थको ऽर्थावृत्त्यभावात्किंतूत्तरखण्ड एवार्थवानित्यन्यत्र निरूपितम् ॥

---

३ P. °त्यर्थं च; B. C. °त्यर्थं च सा.

४ P. °वारणायावश्यकी; C. °वारणाय सावश्यकी; B. °वारणार्थं सावश्यकी.

७ C. एतत्सूत्रे प्रयोजना°.

७ P. भवन्ति व्यधा°; B. C. भवन्तीत्यर्थः । व्यधा°.

८ P. ऽभावादिति; B. C. om. इति.

१३ B. इत्यनेनान्त्यस्य प्राप्नोत्यत.

१५ B. इत्याद्यन्तस्यैव.

एषालोऽन्त्यात्सूत्रे भाष्ये स्पष्टा फलानामन्यथासिद्धिकरणेन प्रत्याख्याता चेति तत एवावधार्यताम् ॥ ९६ ॥

ननु ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेत्यादौ पुमान् स्त्रिया [ १.२.६७ ] इत्येकशेषापत्तिः स्त्रीत्वपुंस्त्वातिरिक्तकृतविशेषाभावादत आह ।

५ **प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः ॥ ९७ ॥**

तेन प्रधानस्त्रीत्वपुंस्त्वातिरिक्ताप्रधानस्त्रीत्वपुंस्त्वकृतविशेषस्यापि सत्त्वेन न दोषः ॥ स्पष्टा चेयं पुमान् स्त्रिया [ १. २. ६७ ] नपुंसकमनपुंसकेन [ १. २. ६९ ] इत्यनयोर्भाष्ये ॥ अन्तरङ्गोपजीव्यादपि प्रधानं प्रबलमिति हेतुमति च [ ३. १. २६ ] इत्यत्र भाष्यकैयटयोः ॥ ९७ ॥

ननु स्वस्रादित्वप्रयुक्तो मातृशब्दस्य ङीम्निषेधः परिच्छेत्तृवाचकमातृशब्दे ऽपि स्यादत आह ।

**अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ॥ ९८ ॥**

तेन शुद्धरूढस्य जननीवाचकस्यैव ग्रहणं न परिच्छेत्तृवाचकस्य ॥ योगजबोधे तदनालिङ्गितशुद्धरूढिजोपस्थितिः प्रतिबन्धिकेति व्युत्पत्तिरेव तद्बीजम् । रथकाराधिकरणन्यायसिद्धो ऽयमर्थः ॥ कश्चित्तु दीधीवेवीटाम् [१.१.६] इत्यत्रानया परिभाषया दीधीङ्वेवीङोरेव ग्रहणं न दीङ्धीङ्-

१५

---

१ C. ऽन्त्यसूत्रे.

२ B. एवावधार्यम्.

३ P. ननु ब्राह्मण°; B. C. नन्वेवं ब्राह्मण°.

८ P. इत्यनयोर्भाष्ये; C. इत्यादौ; B. इत्यादौ भाष्ये; P. mentions the reading इत्यादौ.

१० C. P. °मातृशब्दे ऽपि; B. °शब्दस्यापि.

११ B. न तु दीङ्धीङ्°.

वेव्यूवीनामिति । तन्न । तथा सति दीवेधीवीटामित्येव वदेदित्यन्ये ॥ ९८ ॥

ननु वातायनार्थे गवाक्षे ऽवङो वैकल्पिकत्वाद्गोक्ष इत्याद्यपि स्यादत आह ।

## व्यवस्थितविभाषयापि कार्याणि क्रियन्ते ॥ ९९ ॥

लक्ष्यानुसाराद्व्यवस्था बोध्या ॥ शाच्छोः [७.४.४१] इति सूत्रे लटः ५ शतृ [३.२.१२४] इत्यादिसूत्रेषु च भाष्ये स्पष्टा ॥ ९९ ॥

## विधिनियमसंभवे विधिरेव ज्यायान् ॥ १०० ॥

नियमे ह्यश्रुताया अन्यनिवृत्तेः सामर्थ्यात्परिकल्पनमुक्तानुवाददोषश्चेति लाघवाद्विधिरेवेति बोध्यम् ॥ यस्य हलः [६.४.४९] इत्यत्र भाष्ये स्पष्टेयम् ॥ १०० ॥ १०

नन्वाशंसायां भूतवच्च [३.३.१३२] इत्यनेन लुङ इव लङ्लिटोरप्यतिदेशः स्यादत आह ।

## सामान्यातिदेशे विशेषानतिदेशः ॥ १०१ ॥

सामान्योपस्थितिकाले नियमेन विशेषोपस्थापकसामग्र्यभावो ऽस्या बीजम् । तेनानद्यतनभूतरूपे विशेषे विहितयोस्तयोर्नातिदेशः ॥ इयमनित्या न १५

---

१ B. तथा दीवे°.

२ C. P. वातायनार्थे गवाक्षे; B. वातायनार्थगवाक्षे.

६ C. भाष्ये स्पष्टा; B. स्पष्टैषा भाष्ये.

९ P. इत्यत्र भाष्ये; C. इत्यत्रेजादेः सनुम इत्यत्र च भाष्ये; B. इत्यत्रेजादेः सनुम इत्यादौ च भाष्ये; P. mentions B. C.'s reading.

१५ C. तेनाद्यतन°.

स्यापि [ ६. ४. ६९ ] इति लिङ्गात् । तेन स्थानिवत्सूत्रेण विशेषातिदेशो ऽपि ॥ स्पष्टं चैतत्सर्वं स्थानिवत्सूत्रे भाष्ये ॥ १०१ ॥

ननु तित्स्वरितम् [ ६. १. १८५ ] इति स्वरितत्वं किरतीत्यादावपि स्यादत आह ।

## प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम् ॥ १०२ ॥

इयं चाङ्गस्य [ ६. ४. १ ] इति सूत्रे भाष्ये पठिता । वर्णग्रहणे च न प्रवर्तत इति तत्रैव कैयटे स्पष्टम् । अत एव सनाशंसभिक्ष उः [ ३. २. १६८ ] वले [ ६. ३. ११८ ] इत्यत्र सन्वलयोः प्रत्यययोर्ग्रहणम् ॥ परे तु तित्स्वरितम् [ ६. १. १८५ ] इति सूत्र एषा परिभाषा लक्ष्यसंस्काराय भाष्ये क्वापि नाश्रितेति कैयटेनोक्तम् । अङ्गस्य [ ६. ४. १ ] इति सूत्रे तत्प्रत्याख्यानायैषा भाष्य एकदेशिनोक्ता । अत एव तिति प्रत्ययग्रहणं कर्तव्यमिति वार्तिककृतोक्तम् । उक्तसूत्रयोर्व्याख्यानात्प्रत्यययोरेव ग्रहणमित्याहुः ॥१०२॥

ननु विपराभ्यां जेः [१.३.१९] इत्यात्मनेपदं परा सेना जयतीत्यर्थके परा जयति सेनेत्यत्र प्राप्नोतीत्यत आह ।

## सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ॥१०३॥

तेन विशब्दसाहचर्यादुपसर्गस्यैव पराशब्दस्य ग्रहणमिति तत्रैव भाष्ये

---

१ C. विशेषातिदेशो; B. विशेषार्थातिदेशो.

३ P. ननु ‥ आह ; B. C. ननु सनाशंस [३. २. १६८] इत्युः सन्धात्वोरपि स्यादत आह ; P. mentions the latter reading.

५ C. P. प्रत्ययस्य; B. प्रत्ययस्यैव ; P. mentions the latter reading.

६ C. P. इयं चाङ्गस्येति सूत्रे; B. इयं चाङ्गसंज्ञासूत्रे; P. mentions the latter reading.

स्पष्टम् ॥ सहचरणं सदृशयोरेवेति सहचारितशब्देन सादृश्यवानुच्यते । रामलक्ष्मणावित्यादावपि सादृश्यमेव नियामकम् । सदृशयोरेव सहविवक्षा तयोरेव सहप्रयोग इत्युत्सर्गाच्च ॥ ध्वनितं चेदं कर्मप्रवचनीययुक्ते द्वितीया [२.३.८] इति सूत्रे भाष्ये । तत्र हि पञ्चम्यपाङ्परिभिः [२.३.१०] इति सूत्रेण लक्षणादिद्योतकपरियोगे पञ्चमीमाशङ्क्य यद्यप्ययं परिर्दृष्टापचारो ५ वर्जने चावर्जने चायं खल्वपशब्दो ऽदृष्टापचारो वर्जनार्थ एव कर्मप्रवचनीयस्तस्य को ऽन्यः सहायो भवितुमर्हत्यन्यो वर्जनार्थाद्यथास्य गोः सहायेनार्थ इति गौरेवानीयते नाश्वो न गर्दभ इत्युक्तम् । तेन हि सदृशानामेव प्रयोगे सहायभावो बोधितः ॥ द्विस्त्रिश्चतुः [८.३.४३] इति सूत्रे साहचर्येणैव कृत्वोऽर्थस्य ग्रहणे सिद्धे कृत्वोऽर्थग्रहणादेषानित्या । तेन दीधीवेवीटाम् १० [१.१.६] इत्यत्र धातुसाहचर्ये ऽप्यागमस्येटो ग्रहणमित्यन्यत्र विस्तरः ॥ १०३ ॥

नन्वस्थि [ ७. १. ७५ ] इत्याद्यनङ् प्रियसक्थ्ना ब्राह्मणेनेत्यत्र न स्यादङ्गस्य नपुंसकत्वाभावादत आह ।

श्रुतानुमितयोः श्रुतसंबन्धो बलवान् ॥ १०४ ॥ १५

श्रुतेनैव संबन्धो नानुमितेन प्रकरणादिप्राप्तेनेत्यर्थः । प्रकरणादितः श्रुतेर्बलवत्त्वादिति भावः । एवं च तत्र लिङ्गमस्थ्यादीनामेव विशेषणं नाङ्गस्य । शेशीलुगुम्विधिषु तु गृह्यमाणस्याभावात्प्रकरणप्राप्ताङ्गस्यैव विशेषणम् । अत एव वा नपुंसकस्य [ ७. १. ७९ ] इति सूत्रं वा शाविति न कृतम् । तत्र नपुंसकग्रहणं हि गृह्यमाणस्य शत्रन्तस्यैव नपुंसकत्वे यथा स्याद्बहवो दद- २०

---

४ C. इति सूत्रेण; B. इत्यनेन.

१० P. कृत्वोऽर्थस्य; B. C. कृत्वोऽर्थानां; P. mentions the latter reading.

१८ C. शिशीनुम्विधिषु.

२० P. तत्र नपुंसकग्रहणं हि; B. C. नपुंसकग्रहणं हि तत्र.

तो येषु तानि कुलानि बहुददतीत्यत्र मा भूद्बहूनि ददन्ति येषु ते बहुददन्त इत्यत्र यथा स्यादित्येवमर्थम् ॥ स्पष्टं चेदं स्वमोर्नपुंसकात् [ ७. १. २३ ] इत्यत्र भाष्ये ॥ केचित्त्वचो रहाभ्यां द्वे [ ८. ४. ४६ ] इत्यत्र श्रुतेन रेफस्य निमित्तत्वेन यरन्तर्भावादनुमितं कार्यित्वं बाध्यत इत्येतदुदाहरणमाहुः । तन्न ।
५ तक्रकौण्डिन्यन्यायेन सिद्धेरित्यन्यत्र विस्तरः ॥ १०४ ॥

ननु तत्पुरुषे तुल्यार्थ [ ६. २. २ ] इति स्वरः परमेण कारकेण परमकारकेणेत्यादौ स्यात्तथा गातिस्थाघुपाभूभ्यः [२. ४. ७७] इति लुक् पै शोषण इत्यतः कृतात्त्वात्परस्यापि स्यादत आह ।

## लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ॥ १०५ ॥

१० लक्षणेनेत्यर्थः ॥ तत्तद्विभक्तिविशेषाद्यनुवादेन विहितो हि समासादिः प्रतिपदोक्तस्तस्यैव ग्रहणं शीघ्रोपस्थितिकत्वात् । द्वितीयो हि विलम्बोपस्थितिकः । पै इत्यस्य पा इति रूपं लक्षणानुसंधानपूर्वकं विलम्बोपस्थितिकं पिबतेस्तु तच्छीघ्रोपस्थितिकम् । इदमेव ह्येतत्परिभाषाबीजम् ॥ इयं च वर्णग्रहणे ऽप्योत्सूत्रे भाष्ये संचारितत्वात् । यत्तु वर्णग्रहणे नैषादेचः [६.१.४५]
१५ इत्यत्रोपदेशग्रहणादिति तत्तु तस्मिन्नेव सूत्रे शब्देन्दुशेखरे दूषितमिति तत एव द्रष्टव्यम् ॥ अनित्या चेयं भुवश्च महाव्याहृतेः [ ८. २. ७१] इति महाव्याहृतिग्रहणादित्यन्यत्र विस्तरः ॥ १०५ ॥

---

२ B. इत्यत्र च यथा स्यादि°.

३ B. श्रुतरेफस्य.

४ B. °र्भावानुमितं.

८ C. इत्यस्मात्परस्यापि.

१० P. लक्षणेनेत्यर्थः; B. C. लक्षणं लाक्षणिकमुपचारात्; P. rejects the latter reading as that of Sîradeva.

१३ C. पिबतेस्तु.

१५ B. °ग्रहणात् तत्तु.

नन्वेवं देङो दोधातोश्च कृतात्वस्य घुसंज्ञा न स्यात्तथा मेङ आत्वे प्रणिमातेत्यादौ नेर्गदनद [८. ४. १७] इति णत्वं न स्यात्तथा गै इत्यस्यात्वे घुमास्था [६. ४. ६६] इतीत्वं न स्यादत आह ।

## गामादाग्रहणेष्वविशेषः ॥ १०६ ॥

अत्र ज्ञापकं दैपः पित्त्वम् । तद्ध्यदाविति सामान्यग्रहणार्थम् । अन्यथा ५ लाक्षणिकत्वादेव विधौ तद्ग्रहणे सिद्धे किं निषेधे सामान्यग्रहणार्थेन पित्त्वेन । तेन चैकदेशानुमतिद्वारा संपूर्णपरिभाषा ज्ञाप्यते॥ इयं च लक्षणप्रतिपदोक्तपरिभाषानिरनुबन्धकपरिभाषालुग्विकरणपरिभाषाणां बाधिका दाधा घु [१.१.२०] इति सूत्रे भाष्ये स्पष्टा ॥ गातिस्था [२. ४. ७७] इति सूत्र इणादेशगाग्रहणमेवेष्यत इत्यन्यत्र विस्तरः ॥ १०६ ॥ १०

ननु वृद्ध्यादिसंज्ञाः समुदाये स्युरत आह ।

## प्रत्येकं वाक्यपरिसमाप्तिः ॥ १०७ ॥

देवदत्तादयो भोज्यन्तामित्यत्र भुजिवत् ॥ १०७ ॥

नन्वेवं संयोगसंज्ञा समाससंज्ञाभ्यस्तसंज्ञापि प्रत्येकं स्युरत आह ।

## क्वचित्समुदायेऽपि ॥ १०८ ॥ १५

गर्गाः शतं दण्ड्यन्तामर्थिनश्च राजानो हिरण्येन भवन्तीत्यादौ दण्डनवत् ॥ लक्ष्यानुरोधेन च व्यवस्था ॥ १०८ ॥

ननु यू स्त्र्याख्यौ [१. ४. ३] इत्यत्र व्यक्तिपक्षे दीर्घनिर्देशादनणुत्वेन

---

५ C. अत्र ज्ञापकं; B. अत्र च ज्ञापकं.

७ B. चैकदेशानुमितिद्वारा.

८ B. बाधिका इति दाधा घु इति सूत्रे भाष्ये स्पष्टम्.

१० B. इणादेशग्रहणमेवेष्यत इति न दोष इत्यन्यत्र.

१३ B. भुज्यन्तामित्यत्र.

ग्राहकसूत्राप्राप्त्योदात्ताद्यन्यतमोच्चारणे ऽन्यस्वरकस्य संज्ञा न स्यादत आह ।

## अभेदका गुणाः ॥ १०९ ॥

असति यत्ने स्वरूपेणोच्चारितो गुणो न भेदको न विवक्षित इत्यर्थः ॥ अत्र चास्थिदधि [७.१.७५] इत्यादावनङादेरुदात्तस्यैवोच्चारणेन सिद्ध उदात्तग्रहणं ज्ञापकम् ॥ स्वरूपेणोच्चारित इत्युक्तेरनुदात्तादेरन्तोदात्तादित्युदात्तादिशब्दोच्चारणे विवक्षैव । उञः [१.१.१७] ऊँ [१.१.१८] इत्यत्राननुनासिक एवोच्चारणीये यत्नाधिक्येनानुनासिकोच्चारणाद्विवक्षा बोध्या । पथिमथ्यृभुक्षाम् [७.१.८५] इत्यादौ स्थान्यनुरूपतयानुनासिक एवोच्चारणीये निरनुनासिकोच्चारणात्तद्विवक्षा । एतदर्थमेवासति यत्न इत्युक्तम् ॥ न चैवमस्थ्यादीनां नब्विषयस्य [फि° २.३] इत्याद्युदात्ततयान्त्यादेशस्यानङः स्थान्यनुरूपे ऽनुदात्त एवोच्चारणीय उदात्तोच्चारणं विवक्षार्थं भविष्यतीति कथमस्य ज्ञापकत्वमिति वाच्यम् । परमास्थिशब्दादावन्तोदात्त उदात्तगुणकस्यापि स्थानित्वेन विवक्षायां मानाभावात् ॥ चतसर्याद्युदात्तनिपातनं करिष्यते वधादेश आद्युदात्तनिपातनं करिष्यते पदादयो ऽन्तोदात्ता निपात्यन्ते सहस्य स उदात्तो निपात्यत इत्यादिभाष्यं त्वेकश्रुत्याष्टाध्यायीपाठे क्वचिदुदात्ताद्युच्चारणं विवक्षार्थमित्याशयेन । त्रैस्वर्येण पाठ इति पक्षे तु ज्ञापकपरं भाष्यमिति कैयटादयः ॥ परे तु निपातनं नामान्यादृशे प्रयोगे प्राप्ते ऽन्यादृशप्रयोगकरणं तद्रूपाद्य-

---

१ C. °सूत्राप्राप्त्योदात्ता°; B. °सूत्राप्राप्तौ उदात्ता°.

४ C. °वोच्चारणे सिद्ध,

५ B. °न्तोदात्तादिशब्दोच्चारणे.

१२ C. P. °न्तोदात्त; B. °न्तोदात्तत्व.

१२ B. P. स्थानित्वेन; C. स्थानिवत्त्वेन.

१४ C. [illegible] सहस्य.

त्नात्तत्रतत्रोदात्तादिविवक्षा। तिसृचतास्त्रित्यत्र द्वन्द्वप्रयुक्ते ऽन्तोदात्त उच्चारणीय आद्युदात्तोच्चारणमन्यत्र स्यान्यनुरूपे स्वर उच्चारणीये तत्तदुच्चारणं विवक्षार्थम्॥ संपूर्णाष्टाध्याय्याचार्येणैकश्रुत्या पठितेत्यत्र न मानम्। कश्चित्पदस्यैकश्रुत्यापि पाठो यथा दाण्डिनायनादिसूत्र ऐक्ष्वाकेति। यद्यप्यध्येतार एकश्रुत्यैवाङ्गानि पठन्ति ब्राह्मणवत्तथापि व्याख्यानतो ऽनुनासिकत्वादिवदुदात्तनिपातनादिज्ञानमित्याहुः॥ विधेयाण्विषये त्वप्रत्यय इति निषेधान्न गुणाभेदकत्वेन सवर्णग्रहणम्। अत एव घटवादित्यादौ मतोर्मस्य नानुनासिको वकारः। अत एव तद्वानासाम् [४.४.१२५] इति सूत्रनिर्देशः। अन्यथा प्रत्यये भाषायामिति नित्यमनुनासिकः स्यात्॥ जातिपक्षे तु नास्योपयोग इति बोध्यम्। यू इत्यादौ दीर्घमात्रवृत्तिजातिनिर्देशान्न क्षतिरित्यन्यत्र विस्तरः॥१०९॥ ५ १०

ननु सर्वनामानि [१.१.२७] इत्यत्र णत्वाभावनिपातने ऽपि लोके सणत्वप्रयोगस्य साधुत्वं स्यादत आह।

## बाधकान्येव निपातनानि॥ ११०॥

---

१ B. तत्रतत्रान्तोदात्ता॰.

१ P. ॰चतास्त्रित्यत्र; B. C. ॰चतस्त्रित्यत्रापि; P. rejects the latter reading.

२ C. उच्चारणीये तदुच्चारणं.

३ B. क्वचित्पदैकदेशश्रुत्यापि पाठो; C. क्वचित्पदस्याप्यकश्रुत्या पाठो; Râghavendra reads पदस्य, and Bhairava एकश्रुत्यापि.

७ B. मतोर्मस्यानुनासिको वकारो न.

९ B. प्रत्ययभाषाया॰.

११ P. सर्वनामानीत्यत्र; B. C. सर्वनामानीत्यादौ; P. rejects the latter reading.

तत्तत्कार्ये चाप्राप्ते निपातनारम्भात् । पुराणप्रोक्तेषु [ ४.३.१०५ ] इति निपातितपुराणशब्देन पुरातनशब्दस्य बाधः प्राप्तो ऽपि पृषोदरादित्वान्नेति बोध्यम् । पुराणेति पृषोदरादिः पुरातनेति चेत्यन्ये ॥ इयं सर्वादिसूत्रे भाष्ये स्पष्टा ॥ अबाधकान्यपि निपातनानीति तु भाष्यविरुद्धम् ॥ ११० ॥

ननूखधातोर्द्वित्वे स्वत एव ह्रस्वत्वात्पूर्वमभ्यासह्रस्वत्वाप्रवृत्तौ हलादिःशेषे सवर्णदीर्घे ह्रस्वापत्तिरत आह ।

## पर्जन्यवल्लक्षणप्रवृत्तिः ॥ १११ ॥

एवं च ह्रस्वस्यापि ह्रस्वत्वे कृते लक्ष्ये लक्षणस्येति न्यायेन न पुनर्ह्रस्वः । तदुक्तमिको झल् [ १.२.९ ] इति सूत्रे भाष्ये । कृतकारि खल्वपि शास्त्रं पर्जन्यवदिति । सिद्धे ऽपि ह्रस्वादिकारीत्यर्थः ॥ न च लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरित्यत्र न मानमिति वाच्यम् । समो वा लोपमेक इति लोपेनैकसकारस्य द्वित्वेन द्विसकारस्य पुनर्द्वित्वेन च त्रिसकारस्य सिद्धौ समः सुटि [ ८.३.५ ] इति सूत्रस्यैव मानत्वात् । संप्रसारणाच्च [ ६.१.१०८ ] सिच्चि वृद्धिः [ ७.२.१ ] इत्यादौ भाष्ये स्पष्टमुक्तत्वाच्च ॥ अत्र विकारकृतो लक्ष्यभेदो नेति सिच्चि वृद्धिरिति भाष्यात्प्रतीयत इत्यन्यत्र विस्तरः ॥१११॥

---

१ C. तत्कार्ये.

२ B. P. प्राप्तोऽपि ; C. प्राप्नोति ; P. mentions the latter reading.

३ C. पुरातनेत्यन्ये.

५ C. °ह्रस्वत्वाप्रवृत्तौ; B. °ह्रस्वाप्रवृत्तौ.

८ C. ह्रस्वत्वे; B. ह्रस्वे.

११ B. प्रवृत्तिरिति न्याये न.

१२ C. च त्रिसकारस्य; B. त्रिसकारस्य च.

१४ P. विकारकृतो; B. C. विकारागमकृतो.

ननु स्यन्दूधातोः स्यन्त्स्यतीत्यादावात्मनेपदनिमित्तत्वाभावनिमित्तत्वान्न वृ-द्भ्यश्चतुर्भ्यः [७.२.५९] इति निषेधस्य बहिरङ्गत्वेनान्तरङ्गत्वादूदित्त्वलक्षणस्येड्विकल्पस्यापत्तिरत आह ।

## निषेधाश्च बलीयांसः ॥ ११२ ॥

अन्तरङ्गादुपजीव्यादपि बलीयांस इत्यर्थः ॥ चतुर्भ्य इति तु स्पष्टार्थमेव । अत एव तत्प्रत्याख्यानं भाष्योक्तं संगच्छते ॥ अत एव सवर्णसंज्ञादेर्निषेधविषये न विकल्पः । अन्यथा मीमांसकरीत्या विधेरुपजीव्यत्वेन प्राबल्यात्तस्य सर्वथा बाधानुपपत्त्या दुर्वारः स इति मञ्जूषायां विस्तरः । अत एव द्वन्द्वे च [१.१.३१] विभाषा जसि [१.१.३२] इति चरितार्थम् ॥ विध्युन्मूलनाय प्रवृत्तिरस्या बीजम् ॥ न लुमता [१.१.६३] कर्मणिङ् [३.१.३०] इत्यनयोर्भाष्ये स्पष्टैषा ॥ ११२ ॥

नन्वत्यन्तस्वार्थिकानामर्थप्रत्यायकत्वरूपप्रत्ययत्वानुपपत्तिरत आह ।

## अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे ॥ ११३ ॥

यस्यार्थः प्रकृत्या प्रत्याय्यते सोऽपि प्रत्यय इत्यस्याप्यङ्गीकारात्तस्य प्रत्ययत्वमिति न दोषः । स्वार्थ इत्यस्य स्वीयप्रकृत्यर्थ इत्यर्थः ॥ महासंज्ञाबलादर्थाकाङ्क्षायामन्यानुपस्थितिरस्या बीजम् ॥ सुपि स्थः [३.२.४] इत्यादिसूत्रेषु भाष्ये स्पष्टैषा ॥ ११३ ॥

---

१ B. स्यन्त्स्यतीत्यादौ सकारादिविशेषापेक्षत्वादात्मनेपद°; P. rejects this reading.

६ B. तत्प्रत्याख्यानं भाष्यं.

६ C. निषेधाविषयत्वे न.

८ C. दुर्वार स; B. स दुर्वार.

११ C. स्पष्टैषा; B. स्पष्टा.

१४ B. प्रत्यायते.

## योगविभागादिष्टसिद्धिः ॥ ११४ ॥

इष्टसिद्धिरेव न त्वनिष्टापादनं कार्यमित्यर्थः । तत्तत्समानविधिकद्वितीययोगेन विभक्तस्यानित्यत्वज्ञापनमेतद्बीजम् ॥ ११४ ॥

## पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते ॥ ११५ ॥

५ तत्रतत्रान्यतरस्यां विभाषा वेति सूत्रनिर्देशज्ञापितमिदम् ॥ ११५ ॥

## ज्ञापकसिद्धं न सर्वत्र ॥ ११६ ॥

स्पष्टमेव पठितव्ये ऽनुमानाद्बोधनमसार्वत्रिकत्वार्थमित्यर्थः । तेन ज्ञापकसिद्धपरिभाषयानिष्टं नापादनीयमिति तात्पर्यम् । भाष्ये ऽपि ध्वनितमेतन्ङ्याप्सूत्रादौ ॥ ज्ञापकेति न्यायस्याप्युपलक्षणम् ॥ न्यायज्ञापकसिद्धानामपि केषां-

१० चित्कथनमन्येषामनित्यत्वबोधनायेति भावः । यथा तत्स्थानापन्ने तद्धर्मलाभ इति न्यायसिद्धं स्थानिवत्सूत्रं ज्ञापकसिद्धं च तत्रानल्विधाविति ॥ ११६ ॥

ननु द्रोग्धाद्रोग्धा द्रोढाद्रोढेत्यादौ घत्वादीनामसिद्धत्वात्पूर्वं द्वित्व एकत्र घत्वमपरत्र ढत्वमित्यस्याप्यापत्तिरत आह ।

## पूर्वत्रासिद्धीयमद्वित्वे ॥ ११७ ॥

१५ द्वित्वभिन्ने पूर्वत्र कर्तव्ये परमासिद्धमित्यर्थः । पूर्वत्रासिद्धम् [८.२.१] इत्यधिकारभवं शास्त्रमस्या लिङ्गम् ॥ यत्र च सिद्धत्वासिद्धत्वयोः फले विशेषस्तत्रैवेयम् । कृष्णर्द्धिरित्यादौ जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषाभावेन नास्याः प्रवृत्तिरित्यन्यत्र विस्तरः ॥ सर्वस्य द्वे [८.१.१] इति सूत्रे भाष्ये स्पष्टेयम् ॥ ११७ ॥

---

७ C. तेन परिभाषामादायानिष्टं नापा°.

८ B. P. भाष्ये ऽपि; C. om. अपि.

११ C. °सिद्धं तत्रान°.

१६ C. °भवशास्त्रमस्या ज्ञापकम्.

१९ C. P. स्पष्टेयम्; B. स्पष्टेषा.

ननु गोष्वश्वेषु च स्वामीत्यादिवद्गोष्वश्वानां च स्वामीत्यपि स्यात्स्वामीश्व-र [२.३.३९] इति सूत्रेण षष्ठीसप्तम्योर्विधानादत आह ।

## एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति ॥ ११८ ॥

यत्रान्याकृतिकरणे भिन्नार्थत्वसंभावना तद्विषयो ऽयं न्याय इत्यन्यत्र वि- ५ स्तरः ॥ कृञ्चानुप्रयुज्यते [३.१.४०] इति सूत्रे भाष्ये स्पष्टेयम् ॥ ११८ ॥

ननु विव्याधेत्यादौ परत्वाद्धलादिःशेषे वस्य संप्रसारणं स्यादत आह ।

## संप्रसारणं तदाश्रयं च कार्यं बलवत् ॥ ११९ ॥

तदाश्रयं संप्रसारणाच्च [६.१.१०८] इति पूर्वरूपम् ॥ वस्तुतो लिट्यभ्या-सस्य [६.१.१७] इति सूत्र उभयेषांग्रहणस्योभयेषां संप्रसारणमेव यथा १० स्यादित्यर्थकत्वेनेदं सिद्धमित्येषा व्यर्थेति लिट्यभ्यासस्येति सूत्रे भाष्ये स्पष्टम् । फलान्तराण्यथासिद्धिरपि तत्रैव भाष्ये स्पष्टा । णौ च संश्चङोः [६.१.३१] इत्यादौ संश्चङोरित्यादि विषयसप्तमीति तत्रापि न दोष इत्यन्यत्र विस्तरः ॥ ११९ ॥

यत्तु १५

## क्वचिद्विकृतिः प्रकृतिं गृह्णाति ॥ १२०.१ ॥

तेन निसमुपविभ्यो ह्वः [१.३.३०] इत्यत्र ह्वाग्रहणेन ह्वेञो ग्रह-णसिद्धिः ॥

---

३ B. P. द्वितीयस्यास्तृतीयस्याश्च; C. द्वितीयायास्तृतीयायाश्च.

५ B. तद्विषये.

६ B. सूत्रभाष्ये.

८ B. om. कार्यं.

११ C. °त्यर्थकत्वेनेदं; B. °त्यर्थवत्त्वेनेदं.

१३ C. इत्यादौ संश्चनोरित्यादिविषय°; B. इत्यादि विषय

तथा

## औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ॥ १२०.२ ॥

तेन दादेर्धातोः [८.२.३२] इत्यत्रौपदेशिकधातोरेव ग्रहणमिति
५ तन्न । तयोर्निर्मूलत्वाद्भाष्याव्यवहृतत्वाच्च । न च विकृतिः प्रकृतिं गृह्णातीति
ग्रहिज्या [६.१.१६] इति सूत्रस्थभाष्येणाद्यायारितररकाराच्च । निसमुपवि-
भ्यो ह्व इत्यादौ ह्वेञो ऽनुकरणे सौत्रः प्रयोगः । आत्त्वविषय एवात्मनेपदं
प्रयोगस्थानामेवानुकरणस्य घुसंज्ञासूत्रे भाष्ये स्पष्टमुक्तत्वादित्यन्ये ॥ अन्त्या-
पि तत्रतत्रोपदेशग्रहणं कुर्वतः सूत्रकृतो वार्त्तिककृतश्चासंमता । इह हि व्या-
१० करणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते यत्रास्यैतद्रूपमिति रूपनिर्ग्र-
हश्च शब्दस्य नान्तरेण लौकिकं प्रयोगं तस्मिंश्च लौकिके प्रयोगे सानुबन्ध-
कानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते क उपदेशो नामे-
ति घुसंज्ञासूत्रस्थभाष्येण प्रायोगिकासंभवे तद्ग्रहणमित्यर्थस्य लाभेन भाष्या-
संमता च ॥ भाष्ये सानुबन्धकेत्यादि प्रकृताभिप्रायेण । दादेरिति सूत्रे दादि-
१५ पदस्यौपदेशिकदादित्ववति लक्षणेति न दोष इत्यन्यत्र विस्तरः ॥
यदपि नन्वजर्घा बेभिदीतीत्यादौ तत्तद्गणप्रयुक्ता विकरणा यङ्लुकि स्युस्तथा
यङ्लुकि बेभिदितेत्यादावेकाचः [७.२.१०] इति इण्निषेधः स्यादत आह ।

---

४ C. °धातोर्ग्रहणमिति.

१० B. om. यत्रास्यैतद्रूपमिति.

१० C. रूपनिग्रहश्च.

११ B. लौकिकप्रयोगं.

१३ B. घुसंज्ञासूत्र°.

१६ B. यद्यप्यजर्घा बिभेदती°; C. यदपि नन्वजर्घा बेभिदिती

१७ C. स्यात्तदाह.

शिनपा शपानुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ १२०.३ ॥

अनुबन्धनिर्देशो द्विधा स्वरूपेण ङित इत्यादिपदेन च ॥ हन्ति याति वाति । सनीवन्त [ ७. २. ४९ ] इति सूत्रे भरेति । दीङो युडचि [ ६. ४. ६३ ] । अनुदात्तङितः [ १. ३. १२ ] । दिवादिभ्यः श्यन् [ ३. १. ६९ ] । एकाच उपदेशे [ ७. २. १० ] इत्युदाहरणानि ॥ द्वित्वं सनाद्यन्ताः [ ३. १. ३२ ] इति भूवादयः [ १. ३. १ ] इति च धातुत्वं च भवत्येव गुणो यङ्लुकोः [ ७. ४. ८२ ] इत्यादिभिर्निषेधानित्यत्वकल्पनात् । तेन भष्भावो ऽप्यजर्घा इत्यादौ भवति । अत एव श्वीदितः [ ७. २. १४ ] इति सूत्रे कैयटे यत्रैकाज्ग्रहणं किंचिदिति पाठः ॥ एकाच उपदेशे ऽनुदात्तात् [ ७. २. १० ] इति सूत्र एकाज्ग्रहणेनैकदेशानुमत्यैषा ज्ञाप्यते । अन्यथोपदेशे ऽनेकाचामुदात्तत्वस्यैव सत्त्वेन तद्वैयर्थ्यं स्पष्टमेवेति तदपि न भाष्यानुक्तत्वादेकाज्ग्रहणस्य वधिव्यावृत्त्यर्थमावश्यकत्वाच्च । न च वधिः स्थान्युपदेश एकाजेवेति वाच्यम् । साक्षादुपदेशासंभवेनैतद्विषये स्थान्युपदेशाग्रहणादुपदेशत्वावच्छेदेनैकाजित्यर्थाच्च ॥ किंचोत्तरार्थमेकाज्ग्रहणम् । अत एव जागरितवानित्यादावुपदेश उगन्तत्वमादाय श्र्युकः किति

२ C. यङ्लुकि; B. यङ्लुकीति.

४ B. भरति.

४ C. युडचि; B. युडचीति.

७ P. इति च धातुत्वं च ; B. C. इति धातुत्वं च.

१० C. यत्राज्ग्रहणं.

११ B. P. °देशानुमत्यैषा; C. °देशानुमतिद्वारैषा.

१५ B. उपदेशत्वावच्छिन्नेनै°.

१६ B. उगन्तमादाय.

[७.२. ११] इतीण्निषेधो न। तत्रोपदेश इत्यनुवृत्तिश्च स्तीर्णमित्यादा-
विण्निषेधायेत्याकरे स्पष्टम् ॥ न च भाष्ये यङ्लोपे बेभिदितेत्यादाविट्प्रवृ-
त्त्यर्थमुपदेशे ऽनुदात्तादेकाचः श्रूयमाणादङ्गादित्यर्थे सनीट्प्रतिषेधो वक्तव्यो
बिभित्सतीति दोषोपन्यासवद्यङ्लुकि दोषानुपन्यासेन तत्रेडिष्टः। यङ्लोपेत्या-
५ दि भाष्यं तूपक्रमोपसंहारबलेन न यङ्लुग्विषयम्। किंच तस्य तद्विषयकत्वे
यङ्लोपे स्थानिवत्त्वस्येव यङ्लुक्युपायाप्रदर्शनेन न्यूनतापत्तिरिति वाच्यम्।
इड्विषये यङ्लुको लोके ऽनभिधानेन च्छन्दसि सर्वविधीनां वैकल्पिकत्वेन
च तत्र दोषानुपन्यासेनादोषात्। अन्यथैकाज्ग्रहणं किमर्थमिति प्रश्नस्योत्त-
रत्र जागर्त्यर्थमिह वक्ष्यर्थमित्युत्तरस्य च भाष्ये निरालम्बनतापत्तेः ॥ न
१० चार्धधातुकाक्षिप्तधातोरेकाच इति विशेषणम्। एवं च बिभित्सतीत्यादावुत्त-
रखण्डस्य धातोरेकाच्त्वमस्त्येवोत्तरखण्डे ऽस्तित्ववदेतच्च दयतेः [७. ४. ९]
इति सूत्रे भाष्ये स्पष्टम्। एवं च प्रकृतभाष्यासंगतिरिति वाच्यम्। आक्षेप
आक्षिप्तस्यान्वये च मानाभावात्। अङ्गत्वं तु विशिष्ट एवेत्येकाचो द्वे [६.
१. १] इति सूत्रे भाष्ये स्पष्टम्। निरूपितं च तनादिशेषे शब्देन्दुशेखरे।
१५ धातुत्वं तूत्तरखण्ड एव ॥ अत एवैकाचो बशो भष् झषन्तस्य स्ध्वोः [८.
२. ३७] इति सूत्रे धातोरवयवस्यैकाच इति वैयधिकरण्येनान्वये गर्धप्-
सिद्धिः प्रयोजनमुक्तं भाष्ये न तु प्रसिद्धमजर्घा इति ॥ अजर्घा बेभिदीती-
त्यादौ श्रमुश्यनादयस्तु चर्करीतं चेत्यस्यादादौ पाठेन यङ्लुगन्ते गणान्त-

---

१ C. °वृत्तिश्च स्तीर्णमि°; B. °वृत्तिश्चास्ति तीर्णमि°.

३ C. सनि इट्प्रतिषेधो.

५ P. तद्विषयकत्वे; B. C. तद्विषयत्वे.

१० C. °धातोरेकाजिति विशेषणम्.

१४ B. सूत्रभाष्ये.

१६ B. C. धातोरवयवस्यैकाजिति.

रप्रयुक्तविकरणस्याप्राप्त्या न भवन्ति ॥ छान्दसत्वादेव कार्यान्तराणामपि च्छन्दसि दृष्टप्रयोगेष्वदृष्टानामभावो बोध्यः । भाषायां तु तादृशानामभाव एव । श्तिपृशपादिनिर्देशास्तु भवतेरः [७. ४. ७३] इत्यादिसूत्रस्थतन्निर्देशवन्नार्थसाधका इत्यन्यत्र विस्तरः ॥ १२० ॥

ननु जभो ऽचि रधेश्च नेट्यलिटीत्येव सूत्र्यतां किं द्वी रधिग्रहणेनेत्यत आह । 　५

## पदगौरवाद्योगविभागो गरीयान् ॥ १२१ ॥

प्रतिवाक्यं भिन्नवाक्यार्थबोधकल्पनेन गौरवं स्पष्टमेव ॥ परंतु भाष्यासंमतेयम् । टाङसि [७.१.१२] इति सूत्रस्थभाष्यविरुद्धा च । तत्र चेनादेशेकारप्रत्याख्यानं योगविभागेनैव कृतमिति बहवः ॥ १२१ ॥ 　१०

## अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः ॥१२२॥

ए ओङ् ऐ औच्सूत्रयोर्ध्वनितैषा भाष्ये । तत्रानेकपदघटितसूत्रे प्रायेण पदलाघवविचार एव न तु मात्रालाघवविचार इत्यूकालो ऽज्झ्रस्व [१.२.२७] अपृक्त एकाल् [१.२.४१] इत्यादिसूत्रेषु भाष्ये ध्वनितम् । तत्र हि सूत्रे ऽल्ग्रहणहल्ग्रहणयोर्विशेषविचारे संज्ञायां हल्ग्रहणं ण्यक्षत्रिय [२.४.५८] इति 　१५
सूत्रे ऽणिञोरिति वाच्यमिति त्रीणि पदान्यल्ग्रहणे तदेकं स्वादिलोपे हल्ग्रहणं ण्येति सूत्रे ऽणिञोरिति न वाच्यमपृक्तस्येति वाच्यमिति त्रीण्येव पदानी-

---

२ C. श्तिपाशपादि°.

३ B. इत्यादिस्थतन्निर्देश°; C. इत्यादिसूत्रस्थनिर्देश°.

५ P. द्वी रधिग्रहणे°; B. द्विरधिकरणे°; C. द्विरधिग्रहणे°

७ B. °विभागो बलीयान्.

९ C. चेनादेशेकार°; B. चेनादेशे इकार°.

१२ C. °सूत्रयोर्ध्वनितैषा भाष्ये; B. °सूत्रयोर्भाष्ये ध्वनितैषा.

१६ P. वाच्यमिति त्रीणि; B. C. वाच्यमिति तत्र त्रीणि.

ति नास्ति लाघवकृतो विशेष इत्युक्तम् ॥ अचि श्नु [६.४.७७] इति सूत्र इण इत्येव सिद्धे य्वोरिति संमृद्य ग्रहणान्न पूर्वेगेण्ग्रहणं तत्र विभक्तिनिर्देशे संमृद्य ग्रहणे च सार्धास्तिस्रो मात्रा इण्ग्रहणे तिस्रो मात्रा इति लण्सूत्रे भाष्योक्तेस्तथैतः श्यनि [७.३.७१] इति सूत्रे शितीति वक्तव्यं तत्रायमप्य-
५ र्थः ष्ठिवुक्लमु [७.३.७५] इति सूत्रे शितीति न कर्तव्यं भवतीति भाष्ये न केवलं मात्रालाघवं यावदयमप्यर्थ इति कैयटोक्तेः प्रायेणेति शिवम् ॥ १२२॥

॥ इति श्रीमदुपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागोजीभट्टकृतः

परिभाषेन्दुशेखरः समाप्तः ॥

॥ जर्मण्यदेशोद्भवेन पुण्यग्रामस्थशिक्षालये संस्कृतविद्या॥धक॥र॥

कील्होर्न्नाम्ना शोधितमिदम् ॥

॥ शुभं भवतु ॥

---

२ B. इत्येव वक्तव्ये य्वोरिति संमृद्य संग्रहणात्पूर्वे°.

३ P. ग्रहणे च ; B. C. om. च.

३ C. मात्रा इण् इति तिस्रो.

३ B. लण्सूत्रभा°.

४ B. and Bhâshya तत्रायमप्यर्थः; C. तत्राप्ययमर्थः.

५ C. न वक्तव्यं भवतीति.

## ॥ अथानुक्रमणिका ॥


पृ०

अकृतव्यूहाः पाणिनीयाः .................... ६१

अङ्गवृत्ते पुनर्वृत्तावविधिः .................... ९२

अनन्तरस्य विधिर्वा भवति .................... ७०

अनन्त्यविकारे ऽन्त्यसदेशस्य .................... ९८

अनिनस्मन्ग्रहणान्यर्थवता .................... १७

अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे .................... १०९

अनुदात्तेत्त्वलक्षणमात्मनेपदम° .................... ९४

अनेकान्ता अनुबन्धाः .................... ५

अन्तरङ्गादप्यपवादो बलीयान् .................... ६५

अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते .................... ५३

अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब्बाधते .................... ५८

अपवादो यद्यन्यत्र चरितार्थ° .................... ७३

अभेदका गुणाः .................... १०६

पृ०

अभ्यासविकारेषु बाध्यबाधकभावो .............. ७३

अर्थवद्ग्रहणे नानर्थकस्य .................. १४

अर्धमात्रालाघवेन पुत्रोत्सवं ................ ११५

अवयवप्रसिद्धेः समुदायप्रसिद्धि° ............. १००

असिद्धं बहिरङ्गमन्तरङ्गे .................. ४१

आगमशास्त्रमनित्यम् ...................... ९३

आतिदेशिकमनित्यम् ...................... ९५

उणादयो ऽव्युत्पन्नानि .................. २०

उत्तरपदाधिकारे प्रत्ययग्रहणे ............... २३

उपपदविभक्तेः कारकविभक्ति° ............... ९७

उपसंजनिष्यमाणनिमित्तोऽप्यपवाद ............. ७१

उभयगतिरिह भवति ...................... ७

उभयनिर्देशे पञ्चमीनिर्देशो ................ ७६

एकदेशविकृतमनन्यवत् .................... ३३

एकयोगनिर्दिष्टानां सह .................... १७

एकस्या आकृतेश्चरितः .................... १११

एकान्ताः ............................. ५

औपदेशिकप्रायोगिकयोरौपदेशि ............... ११२

कार्यकालं संज्ञापरिभाषम् .................. १

पृ०

कायमनुभवन्हि कार्यौ........................ ८
कृद्ग्रहणे गतिकारकपूर्वस्यापि.................. २५
क्त्ल्युट्तुमुन्खलर्थेषु........................ ७५
क्वचित्कृताकृतप्रसङ्गमात्रेणापि................ ३९
क्वचित्समुदाये ऽपि........................ १०५
क्वचित्स्वार्थिकाः प्रकृतितो.................. ८५
क्वचिदपवादविषये ऽप्युत्सर्गो.................. ६७
क्वचिदेकदेशो ऽप्यनुवर्तते.................. १८
क्वचिद्विकृतिः प्रकृतिं गृह्णाति.............. १११
गणकार्यमनित्यम्........................ ९४
गतिकारकोपपदानां कृद्भिः.................. ७९
गामादाग्रहणेष्वविशेषः .................. १०५
गौणमुख्ययोर्मुख्ये........................ १४
ग्रहणवता प्रातिपदिकेन.................... २९
चानुकृष्टं नोत्तरत्र........................ ८१
ज्ञापकसिद्धं न सर्वत्र...................... ११०
तदनुबन्धकग्रहणे नातदनुबन्धकस्य.......... ८४
तन्मध्यपतितस्तद्ग्रहणेन.................. ९१
ताच्छीलिके णे ऽणकृतानि.................. ९०

| | पृ। |
|---|---|
| ताच्छीलिकेषु वासरूपविधि° | ७४ |
| धातोः कार्यमुच्यमानं तत्प्रत्यये | ९० |
| नञिवयुक्तमन्यसदृशाधिकरणे | ७२ |
| नञ्घटितमनित्यम् | ९४ |
| नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः | ५१ |
| नानर्थकेऽलोऽन्त्यविधिरनभ्यास° | ९९ |
| नानुबन्धकृतमनेकाल्त्वम् | ६ |
| नानुबन्धकृतमनेजन्तत्वम् | ६ |
| नानुबन्धकृतमसारूप्यम् | ७ |
| निरनुबन्धकग्रहणे न सानुबन्धकस्य | ८४ |
| निर्दिश्यमानस्यादेशा | ११ |
| निषेधाश्च बलीयांसः | १०९ |
| पदगौरवाद्योगविभागो गरीयान् | ११५ |
| पदाङ्गाधिकारे तस्य च | २६ |
| परान्नित्यं बलवत् | ३८ |
| पर्जन्यवल्लक्षणप्रवृत्तिः | १०८ |
| पर्यायशब्दानां लाघवगौरव° | ११० |
| पुनःप्रसङ्गविज्ञानात्सिद्धम् | ३४ |
| पुरस्तादपवादा अनन्तरान्वि° | ६९ |

पृ०

पूर्वं ह्यपवादा अभिनिविशन्ते .................. ७१
पूर्वत्रासिद्धीयमद्वित्वे .................. ११०
पूर्वपरनित्यान्तरङ्गापवादा° .................. ३४
पूर्वोत्तरपदनिमित्तकार्यात्पूर्वं° .................. ५७
प्रकल्प्य वापवादविषयं तत .................. ७१
प्रकृतिग्रहणे ण्यधिकस्यापि .................. ९२
प्रकृतिग्रहणे यङ्लुगन्तस्यापि .................. ९५
प्रकृतिवदनुकरणं भवति .................. ३३
प्रत्ययग्रहणे चापञ्चम्याः .................. २२
प्रत्ययग्रहणे यस्मात्स .................. २१
प्रत्ययाप्रत्यययोः प्रत्ययस्य .................. १०२
प्रत्येकं वाक्यपरिसमाप्तिः .................. १०५
प्रधानाप्रधानयोः प्रधाने कार्यं° .................. १००
प्रातिपदिकग्रहणे लिङ्गविशिष्ट° .................. ७६
बहुव्रीहौ तद्गुणसंविज्ञानमपि .................. ८१
भाव्यमानेन सवर्णानां .................. १९
भाव्यमानो ऽप्युकारः .................. १९
मध्येऽपवादाः पूर्वान्विधी° .................. ६९
यत्रानेकविधमान्तर्यं .................. १३

पृ०

यथोद्देशं संज्ञापरिभाषम्.................. ... १

यदागमास्तद्गुणीभूता°.................. ९

यस्मिन्विधिस्तदादावल्ग्रहणे.................. ३१

यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम् ४०

यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ४०

योगविभागादिष्टसिद्धिः.................. ११०

लक्षणप्रतिपदोक्तयोः.................. १०४

लक्षणान्तरेण प्राप्नुवन्विधि°.................. ३९

लादेशेषु वासरूपविधि°.................. ७५

लुग्विकरणालुग्विकरणयोर°.................. ९१

वर्णाश्रये नास्ति प्रत्यय°.................. २०

बाधकान्येव निपातनानि.................. १०७

वार्णादाङ्गं बलीयो भवति.................. ५८

विकरणेभ्यो नियमो.................. ३७

विधिनियमसंभवे विधिरेव.................. १०१

विधौ परिभाषोपतिष्ठते.................. ९६

विभक्तौ लिङ्गविशिष्टाग्रहणम्.................. ७८

व्यपदेशिवदेकस्मिन्.................. २७

व्यपदेशिवद्भावोऽप्रातिपदिकेन.................. ३०

पृ०

व्यवस्थितविभाषयापि कार्याणि ............ १०१
व्याख्यानतो विशेषप्रतिपत्ति° ............ १
शब्दान्तरस्य प्राप्नुवन्विधि° ............ ३९
शब्दान्तरात्प्राप्नुवतः ............ ३९
श्तिपा शपानुबन्धेन निर्दिष्टं ............ ११३
श्रुतानुमितयोः श्रुतसंबन्धो ............ १०३
सकृद्गतौ विप्रतिषेधे ............ ३४
संज्ञापूर्वकविधेरनित्यत्वम् ............ ९३
संज्ञाविधौ प्रत्ययग्रहणे ............ २४
संनिपातलक्षणो विधिरनिमित्तं ............ ८५
संनियोगशिष्टानामन्यतरापाय ............ ८९
समासान्तविधिरनित्यः ............ ८५
संप्रसारणं तदाश्रयं च कार्यं बलवत् ............ १११
सर्वविधिभ्यो लोपविधिरिड्विधिश्च ............ ९५
सर्वे विधयश्छन्दसि ............ ३२
सर्वो द्वन्द्वो विभाषैकवद्भवति ............ ३१
सहचरितासहचरितयोः ............ १०२
सामान्यातिदेशे विशेषानतिदेशः ............ १०१
सांप्रतिकाभावे भूतपूर्वगतिः ............ ८१

पृ०


त्रे लिङ्गवचनमतन्त्रम् ................ ७८
ीप्रत्यये चानुपसर्जने न ................ २४
वराभिन्नस्य प्राप्नुवन्वि० ................ ४०
वरविधौ व्यञ्जनमविद्यमानवत् ................ ८२
ूस्वरप्राप्तौ व्यञ्जनम० ................ ८३


॥ इत्यनुक्रमणिका समाप्ता ।